# काव्यदीपिका

## संस्कृत-हिन्दी-टीकाद्वयोपेता

विद्याभास्कर, वेदान्ताचार्य
पंडित हरिदत्त शास्त्री सप्ततीर्थ

श्रीः

# काव्यदीपिका

## विद्यारत्नकान्तिचन्द्रभट्टाचार्येण सङ्कलिता

सनाढ्यवंशावतंसेन हरिद्वारोपवर्त्तिज्वालापुरीयगुरुकुलमहाविद्यालय-
स्याचार्येणाऽऽयुर्वेदाचार्येण न्याय-साहित्य-व्याकरणादिशास्त्र-
नदीष्णेन विद्याभास्करेण न्याय-व्याकरणादिसप्ततीर्थेन
दर्शनशेवधिना वेदान्ताचार्येण व्याकरणशास्त्रिणा
कवितार्किकहरिदत्तशास्त्रिणा विरचितयाऽ-
तिसरलया स्वोपज्ञ'प्रदीपिका'ख्य-
संस्कृतव्याख्यया हिन्दीभाषया
च समुद्भासिता


प्रकाशक

**मेहरचन्द्र लक्ष्मणदास**

**संस्कृत हिन्दी पुस्तकालय**

सैदमिट्ठा बाज़ार, लाहौर

प्रथमावृत्तिः

बढ़िया संस्करण १) ] संवत् १९९५ [ विद्यार्थी संस्करण ।।।)

पञ्चनदीयविश्वविद्यालये संस्कृताचार्याणां संस्कृतविभागाध्यक्ष-
वर्याणाम्, एम. ए. ( पञ्जाब ), डी. फिल. ( Oxon. )
Officier d' Academie ( France ) प्रभृत्यनेक-
विरुदभाजां श्री डाक्टर लक्ष्मणस्वरूपमहोदयानां
करकमलयोः सप्रश्रयं

# समर्पणम्

*  *  *

निगमरतनिरुक्ततत्त्ववानः, द्रुतसकलार्थिजनार्पितेष्टकामः ।
अतिशयकरुणाविधेयरूपः, जयतितरां बुधलक्ष्मणस्वरूपः ॥ १ ॥
गुणिवर ! गुणगौरवात्प्रकृष्टः, स्मितयुतवाक् ! तव दर्शनात् प्रहृष्टः ।
बहुधृतसुपकारभारभारात्, प्रथयति कोऽपि नतो वचोभिरेभिः ॥ २ ॥
बुधवर ! बहुमानपात्र ! विद्वन् ! श्रुतिमतसम्मतकर्म ! पण्डिताऽग्र्य !
तव करकमलद्वयस्य मध्ये, विलसतु काव्य'प्रदीपिका' ममेयम् ॥ ३ ॥

*  *  *

समर्पयिता

**हरिदत्तशास्त्री**

# छिन्नाः शब्दाः ।

——:०:——

'नमस्तमःपराभूतभूतवर्गानुकम्पिने ।
श्वेतभानु-बृहद्भानु-भानु-भासितचक्षुषे ॥'

'नमस्तमःपारपरार्ध्यवृत्तये,
नमः समस्ताध्वविभक्तशक्तये ।
नमः क्रमव्यस्तसमस्तमूर्तये
नमः शमस्थार्पितभक्तिमुक्तये ॥'

'देवत्रयी वा निगमत्रयी वा
यस्याः स्वरूपं गदितुं न शक्ता ।
लोकत्रयीभाववि[1]नाशहेतुः
शक्तित्रयी मे त्रितयीं[2] निहन्तु ॥'

नास्त्यविदितमिदं सारस्वतरसावगाहनशीलानां विपश्चिदपश्चिमानां यत् महात्मा भर्तृहरिः पद्यमेकं जगौ । तथाहि—

'साहित्यसंगीतकलाविहीनः,
साक्षात् पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम्' ॥ इति ।

अत्रेदं चिन्त्यम्—किमिति वैयाकरणशिरोमणिर्भूत्वाऽपि भर्तृहरिः साहित्य-शास्त्रं प्रति स्वं भक्त्यतिशयं प्राचीकटत् ? किमिति च सोऽपि वाराणसेयकतिपय-प्रख्याताग्रगण्यवैयाकरणशिरोमणिवत् वर्तमानगुरुकुलप्रणालीसञ्चालनधुरन्धरप्रबन्ध-कर्तृसभासदस्यवद्वैदिकाऽऽर्षपरिपाटीपरिचालनडिण्डिमघोषबधिरीकृतकर्णशिक्षातत्त्वा-नभिज्ञवावदूककतिपयमहापण्डितजनवच्च साहित्यशून्यो नासीत् ? किमिति च 'साहित्यं खलु निदानमाचारहीनतायाः, मूलं धर्मविनाशस्य, अत्युष्णवारिप्रसेक आर्षप्रणालीकन्दलस्य' इति नाघोषयदिति विचिकित्सायां सुविशदमेवेदमुत्तरम्—

---

१ भाव उत्पत्तिः स्थितिश्च । २ तापत्रयीमित्यर्थः ।

मक्षिकागणो व्रणमिव सर्वोऽपि जन्तुः स्वानुरूपमेवांशं तत्तद्वस्तुनः समाकर्षति । जलौका हि दुष्टमेव रक्तं पिबति । तद्वत्स्वच्छाशयाः प्राणिनो वर्ण्यमानवस्तुसुषमाऽऽकर्णनदर्शनलुब्धमानसा न गणयन्ति तत्र दुर्वासनालवम् । व्यालचेतसस्तु वर्ण्यमानं रमणीरमणीयवस्तु हृदयतलगतं कृत्वा त्रपासूत्स्वप्राय-मानाः त्रपाः त्रपयन्ति । आक्षिपन्ति च शास्त्रम्, न तु दूषितमन्तःकरणम् । तदत्र को दोषो वराकस्य साहित्यशास्त्रस्य । किञ्च—साहित्यशास्त्रं विना न किञ्चनापि शास्त्रं परिनिष्ठितं तिष्ठति । साहित्यशास्त्रं हि व्यावहारिकमध्यापनम् । अत एवास्यावश्यकतामनुभवन्तो भट्टि-कविराजप्रभृतयः प्राचीनवैयाकरणमूर्धन्याः भट्टिकाव्य-राघवपाण्डवीय-वासुदेवविजयप्रभृतिग्रन्थरत्नानि निर्ममुः । अद्यत्वे तु साहित्याद् दन्दशूकादिव बिभ्यति बहवोऽकृतधियः । सैषा तेषामनभिज्ञता नावहति दोषलेशमपि शास्त्रस्य । तदुक्तम्—'नैष स्थाणोरपराधः यदेनमन्धो न पश्यति' इति श्रुत्वा,

'कमलिनि ! मलिनीकरोषि चेतः, किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते जगति जयन्तु चिरायुषो मिलिन्दाः ॥'

इति च पण्डितराजैः ।

नापि साहित्याध्यापनं वेदाध्ययनप्रतिबन्धीति शङ्क्यम् । मुहेरास्ते छात्रा वा पण्डिता वा ये ज्वरनिर्हरणाय स्वदतामियमिति चिन्तयता भिषजां वरेण दत्तां मिष्टाऽऽलुलितां कट्वौषधगुटिकां गुडजिह्विकाभूतां केवलं जिह्वया मिष्टमिष्ट-मेव लिहन्तो, नावतारयन्ति गलाधस्तात्ताम् । तदयमपराधस्तादृशोपदेष्टॄणां वा तादृशचतुरामयाविनां वा । मध्यवर्ति निर्दोषं शास्त्रं किमिति तैः संदूष्यते, एतन्न विजानीमः । भवतु, साहित्यशास्त्रमिदं न विषयो वैयाकरणखसूचीनामिरिणा-शयानाम्, इदं हि भावनावतां विषयः । यो हि नाभिनन्दति काश्मीरकरामणीयकम्, परिचिनोति परदुःखसुखव्यतिकरम्, नावगच्छति परेषां हृदयान्तस्तलम्, नासौ शक्नोति संभावयितुमपि साहित्यशास्त्रस्य महत्त्वमैदम्पर्यं वा । तदुक्तमानन्दवर्धनाचार्यैः—

'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥'

भगवती श्रुतिरपि भगवन्तं परमेश्वरं कविमाह—'स पर्यगादि'ति वेदमन्त्रे । तस्मात् साधूक्तं भर्तृहरिणा—'साक्षात्पशुः पुच्छविषाणहीनः' इति ।

इदं च शास्त्रं रीतिरसालङ्कारध्वन्यादिविषयकत्वेन सहस्रमुखं प्रथते। तत्परिज्ञानाय पूर्वाचार्यैरनेके ग्रन्था निरमायिषत। ते हि सुकुमारमतिभिर्न सुशकग्रहा इत्यालोच्य मम्मट-दण्डि-विश्वनाथादिप्रणीतग्रन्थरत्नेभ्यः सारमाकृष्य विद्यारत्नो भट्टाचार्यः श्रीपण्डितः कान्तिचन्द्रः काव्यदीपिकामिमां निरमिमीत । उपयोगिताञ्चास्या आलक्ष्य तत्तद्विश्वविद्यालयशिक्षापटलसदस्याः स्वस्वपरीक्षासु पाठ्यग्रन्थरूपेण निरधारयन् ।

अस्याश्चायं विषयसंक्षेपः—

(१) प्रथमशिखायाम्—काव्यप्रयोजनं लक्षणं च ।
(२) द्वितीयशिखायाम्—अभिधा-लक्षणा-व्यञ्जनानां निरूपणम् ।
(३) तृतीयशिखायाम्—काव्यभेद-रस-ध्वनिभेदानां निरूपणम् ।
(४) चतुर्थशिखायाम्—नायकादीनां नाटकोपयोगिनां वस्तूनां सविस्तरं वर्णनम् ।
(५) पञ्चमशिखायाम्—दोषनिरूपणम् ।
(६) षष्ठशिखायाम्—गुणनिरूपणम् ।
(७) सप्तमशिखायाम्—रीतिनिरूपणम् ।
(८) अष्टमशिखायाम्—अलङ्कारनिरूपणम् ।

इति । विशेषतस्तु विषयानुक्रमणिकायां द्रष्टव्यम् ।

पञ्चनदीयविश्वविद्यालयस्य प्राज्ञपरीक्षायामस्या निर्धारणं विज्ञाय काठिन्यं, वैषम्यं, दुर्बोधताञ्चैतद्विषयस्य विमृश्य संस्कृतपुस्तकालयाध्यक्षाः सुहृद्वराः श्रीखजानचीरामादिमहोदया मां प्रैरिरन्नेतां टीकयितुम् । अहन्तु यथाशक्ति प्रयस्य नातिबहुलैरहोभिरिमां हिन्दीभाषोपबृंहितां संस्कृतटीकां समापिपम् । यथारुचि कञ्चिदर्थं संस्कृतमेवालम्ब्य कञ्चिदर्थं च हिन्दीभाषामेवाश्रित्य प्रास्फोरयम् । यथामति चास्याः सारल्यं कर्तुमुदयुञ्जि । ऊहितप्रश्नोत्तरमालापि प्रतिशिखमन्ते योजिता । **मन्ये छात्रवृन्दमिमामादृत्य ममोत्साहं द्विगुणयिष्यति ।** स्वयमेव च पठित्वा ज्ञास्यति कथमियमुपकरोतीति । 'नहि कस्तूरिकामोदः शपथेन विभाव्यते' इति न्यायेनास्मिन् विषये पराधीने मौनाश्रयणमेव वरम् । अन्ते च छात्रवृन्देन सह प्रथमपरिचयप्रदानानुग्रहकारिणे श्रीयुत**मेहरचन्द्रलक्ष्मणदास-संस्कृतपुस्तकालयाध्यक्ष**वर्याय मित्रवर**श्रीखजानचीराम**महोदयाय सबहु-

मानं सप्रेमातिशयं च साधुवादानर्पयामि, वहामि चाधमर्णताम् । स्मरणमात्रेण च सुम्ननगरीय(बेलमगञ्जस्थ)चिरञ्जीवपुस्तकालयाध्यक्षस्य पालीवालकुलललामभूतस्य **श्रीपण्डितचिरञ्जीवलाल**शर्मणश्च कृतज्ञतां प्रकाशयामि, येन स्वपुस्तकालयभवनं मदर्थेऽनपावृतद्वारं कृतमिति । स्वस्खलनविषये चास्मत्सगोत्राणां विद्वद्वरपण्डित-**श्रीशालग्रामशास्त्रिणां** श्लोकरत्नमिदम्मतिपथमधिरोहति—

"दुर्मोषो दोषसंघः, क्षणमपि न दृढा मानुषी शेमुषीयम्,
गम्भीराम्भोधितुल्यं दुरधिगममहो शास्त्रतत्त्वं विशेषात् ।
अद्धा बद्धाञ्जलिस्तद्गुणगणनिकषान् प्रार्थये प्रार्थनीयान्,
जोषंजोषं विदोषं कलयितुमखिलं जोषमेवानतोऽहम् ॥"

इति शिवम् ।

गुरुकुलमहाविद्यालयः,
ज्वालापुरम्
१८।८।३८

विदुषामनुचरः
**श्रीहरिदत्तशास्त्री**
**ज्वालापुरीय-गुरुकुल-महा-**
**विद्यालयस्याचार्यः**

# विषयानुक्रमणिका

## प्रथमशिखायाम्—



## द्वितीयशिखायाम्—



## तृतीयशिखायाम्—

## पञ्चमशिखायाम्—



## षष्ठशिखायाम्—



## सप्तमशिखायाम्—



## अष्टमशिखायाम्—

अष्टमशिखालोके—

( अर्थालङ्कारप्रदर्शनम् )

श्रीः

# काव्यदीपिका

## प्रथमशिखा

मङ्गलाचरणम्—

**मातरं हृदये ध्यात्वा विशदाम्बुजवासिनीम् ।**
**बालानां सुखबोधाय क्रियते काव्यदीपिका ॥१॥**

टीकाकर्तुर्मङ्गलाचरणम्—

कृता अनेकाः कृतकारिसूरिभिः, लसन्ति टीका विविधास्तथाप्यसौ ।
उदेति वर्णिव्रजसौख्यवापिका 'प्रदीपिका' संयुतकाव्यदीपिका ॥
यच्छेमुषीतिग्ममयूखभासा शास्त्राम्बुजातानि समुल्लसन्ति ।
यद्वाग्रसास्वादनदत्तकर्णाः समस्तवर्णाश्चरणौ श्रयन्ति ॥
यत्सूनवः श्रीरघुनाथशास्त्रिप्रख्या गुरूरुप्रतिमां वहन्ति ।
तान् प्रेमपाथोनिधिशीतरश्मीन् श्रीकाशिनाथाख्यगुरून्नतोऽस्मि ॥
यः शब्दशास्त्रनिखिलागमतन्त्रवेत्ता, साहित्यबन्धकुशलः सुकृती कलासु ।
'रामप्रिया'ऽन्वितमुदारचरित्रचित्रं, श्रीभीमसेनपितरं तमहं नमामि ॥

**टीका**—प्रारिप्सितपरिसमाप्तिकामो भट्टाचार्यः विद्वदग्रेसरः विद्यारत्नः श्रीकान्तिचन्द्रो दृष्टादृष्टविघ्नव्रातनिवृत्त्यर्थं मङ्गलं निबध्नाति—मातरमिति। विशदं विकसितं यदम्बुजं कमलं तत्र वस्तुं शीलं यस्यास्तां तादृशीं मातरं सरस्वतीजननीं हृदये मनसि ध्यात्वा निध्याय बालानां अनधीतालङ्कारशास्त्राणां व्युत्पित्सूनां सुखेन अनायासेन बोधाय ज्ञानाय काव्यदीपिका काव्यस्य क्रान्तदर्शिकर्मणोऽलङ्काररीतिछन्दोरसादिभिरनेकरूपस्य दीपिकेव दीपिका प्रकाशिका एतन्नामकपुस्तकं क्रियते विरच्यते इत्यर्थः। मयेति शेषः।

---

१ 'रामप्यारी'।

**भाषार्थ**—विकसित कमल में रहने वाली माता सरस्वती देवी को हृदय में ध्यान करके बालकों के सुख से ज्ञान के लिये मैं काव्यदीपिका नामक पुस्तक को बनाता हूँ। वक्तव्य—यह ग्रन्थ केवल इस रूप में ही नया है, वैसे संग्रहमात्र है। अतः विरचन आकृतिमात्र का है, लक्ष्यलक्षण का नहीं।

काव्यप्रयोजनम्—

**'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥२॥**

[ मम्मटः ]

**टीका**—काव्यमिति—काव्यं कविकर्म यशसे कीर्तयेऽर्थकृते धनोपार्जनाय व्यवहारविदे राजसचिवादिभिः कथं वर्तितव्यमिति लोकाचारपरिज्ञानाय शिवेतरस्य दुःखस्य क्षतये नाशाय सद्यः शीघ्रमेव परा उत्कृष्टा या निर्वृतिः सुखं मोक्षाख्यं तस्यै तदवाप्तये इत्यर्थः। कान्तासम्मितं कान्तासदृशं तस्य भावस्तत्ता तया कान्तासम्मिततया प्रेयसीसादृश्येनोपदेशयुजे उपदेशप्रदानायेत्यर्थः। भवतीति क्रियते इति वा शेषः।

एवं षट् प्रयोजनानि काव्यस्य वर्णितानि यानि काव्यं सर्वथापि न निष्प्रयोजनमिति सेव्यमेवेति लोकानां प्ररोचनां जनयन्ति।

**भाषार्थ**—काव्य से यश, धन, व्यवहारज्ञान, दुःखध्वंस, परमसुख (मुक्ति) तथा स्त्रियों के समान मधुर वचनों में उपदेश होता है या किया जाता है। इस प्रकार काव्यप्रवृति सुतरां प्रशंसनीय है।

**काव्यं हि पाठादिसमनन्तरमेवानिर्वचनीयविलक्षणानन्दाय, कालिदासादीनामिव यशःसम्पत्तये, श्रीहर्षादेर्धावकादीनामिव धनाधिगमाय, लोकाचारादिपरिज्ञानाय, सुधामयेनोपदेशवचनेन रामादिवत् प्रवर्तितव्यं न रावणादिवदिति सत्पथप्रवर्तनाय, साधुविगर्हितवर्त्मानुवर्तनाय च तत्तद्भाषासु व्युत्पत्तिलाभाय च यथायोगं कवेः पाठकानां च भवतीति बहुफलतया काव्यस्य तल्लक्षणादिकमवश्यमवगन्तव्यं धीमतामिति प्रथमतः काव्यस्य लक्षणमाह—**

**टीका**—काव्यं हि पाठादिसमनन्तरमेवार्थानुसन्धानरहितेभ्योऽपि पुम्भ्योऽ-

निर्वचनीयाद्भुतहर्षप्रकर्षाय भवतीति व्याख्यानमुक्तश्लोकस्थसद्यः परनिर्वृतये इति पदस्य। कालिदासादीनामिव यशःसम्पत्तये कीर्तिसमुपार्जनाय भवति। कालिदासस्य हि यशो द्वीपान्तरेष्वप्यद्याप्यक्षुराणं वर्तते, येन भारतं गौरवं वहति। श्रीहर्षनामकराज्ञः सकाशात्, तन्नाम्ना ग्रन्थान् रत्नावलीं नाम नाटिकां च विधाय धावकनामा कविर्महद्धनं लेभे इति प्रसिद्धिः। एवमेव भोजे भुवं शासति धाराधिपेऽनेके दरिद्रपण्डिताः दारिद्र्यं क्षपयामासुः। सुधामयं यदुपदेशवचनं तेनेति व्याख्यानमिदं कान्तासम्मित-तयोपदेशयुजे—इति पदस्य। अस्यैव कृतो विस्तरो—'न रावणादीत्यारभ्यान-नुवर्तनाय चेत्यन्तम्। साधुभिर्विगर्हितं यद् वर्त्म तस्याननुवर्तनायेत्यर्थः। तत्तद्भाषासु व्युत्पत्तिलाभायेत्यपि उपदेशपदस्यैव व्याख्यानम्। श्लोकस्थं 'शिवेतरक्षतये' इति पदं न व्याख्यातम्। तच्चेत्थं व्याख्येयम्—शिवादितरत् शिवेतरं तस्य क्षतये नाशाय। यथा—बाणस्य श्यालभूतो मयूरकविर्भगिन्याः शापेन कुष्ठीभूतः सन् शतरज्जुयुक्ते शिक्ये स्थापयित्वाऽऽत्मानं शिक्यमवालम्बयद्धृषीकेशे लक्ष्मणान्दोलनाख्ये (लक्ष्मणझूला) प्रदेशे। तत्र पूर्वाभिमुखः सूर्यं शतकेन पद्यानामुपातिष्ठत। एकैकां च रज्जुं न्यकृन्तत्। सूर्यदेवप्रभावात् कुष्ठरोगा-न्निरमुच्यतेति वृद्धपरम्परया। कवेः तत्काव्याध्येतुश्च पूर्वोक्तफलकदम्बकनिष्पत्तये भवतीति तस्य काव्यस्य लक्षणादिकमवश्यमेव ज्ञातव्यमिति हेतोः काव्यस्य लक्षणमाह। कारिकाया व्युत्क्रम्यव्याख्यानं वैचित्र्याय फलतारतम्यानुरोधेन वेति।

**भावार्थ**—काव्य का पाठ करने के अनन्तर क्षण में ही अनिर्वचनीय विलक्षण आनन्द होता है। कालिदास प्रभृति कवियों के समान नित्य यशःशरीर प्राप्त होता है। जैसे धावक कवि को श्रीहर्षवर्धन नामक राजा से धन मिला, इसी प्रकार धन भी मिलता है। लोकव्यवहार की—राजा, चेट, मन्त्री, स्त्री, दासी, गुरु आदि से कैसे व्यवहार करना चाहिए, यह शिक्षा मिलती है। सुधा के समान मीठे वचनों में काव्य यह शिक्षा देता है कि राम के समान पिता के आज्ञाकारी और भरत के समान भ्रातृभक्त बनो, रावण के समान पराई स्त्री को बुरी निगाह से मत देखो नहीं तो समूल नष्ट हो जाओगे। इस प्रकार काव्य सन्मार्ग पर चलाता है और सज्जनों से निन्दित मार्ग से हटाता है। तथा अनेक लाटी, शूरसेनी, प्राकृत, महाराष्ट्र आदि भाषाओं का भी ज्ञान करा देता है (क्योंकि यह भाषाएँ नाटकादि में प्रयुक्त होती हैं), जिससे कवि और पाठक दोनों की ही व्युत्पत्ति बढ़ती है। एवं काव्य-परिज्ञान के अनेक प्रयोजन

होने के कारण उसका लक्षण-भेद आदि बुद्धिमानों को अवश्य जानना चाहिए। अतः सब से पहले काव्य का लक्षण कहते हैं।

**कथ्यते काव्यम् 'इष्टार्थव्यवच्छिन्ना पदाऽऽवली' ॥३॥**

[ दण्डी ]

**इष्टाः—अलौकिकचमत्कारित्वेन सहृदयमनोरमाः, अर्थास्तैर्व्यवच्छिन्ना—विलक्षणीकृता, पदावली—पदसमूहः, काव्यम्। 'रिपुस्ते मृतः' 'पुत्रस्ते जातः' इत्यादिवाक्येन जनितस्य आह्लादस्य न लोकोत्तरत्वमिति न तत्र काव्यत्वप्रसक्तिः। तथा च 'लोकोत्तरचमत्कारितया सहृदयहृदयाकर्षि वाक्यं काव्यमिति' फलितम्।**

**टीका**—अलौकिकत्वमेवात्रेष्टत्वम्। तच्चालौकिकत्वं काव्यनाट्याभ्यासजन्यसुखे। नतु लौकिके ग्राम्यसुखे वाक्यमात्रप्रयोगजन्ये वा सुखे वर्तते। विलक्षणीकृता विच्छित्तिविशेषं प्रापिताऽलङ्कृतेत्यर्थः। तथाच काव्यश्रवणनाट्यदर्शनोत्पन्नलोकोत्तरार्थसमलङ्कृता पदावली काव्यमिति फलितम्। 'वाक्यं रसात्मकं काव्यम्' इति दर्पणकर्तुरप्ययमेवाशयः। 'रिपुस्ते मृतः' इत्यादिवाक्येन सुखस्योत्पन्नत्वेऽपि तत्सुखस्य लोकोत्तरानन्दजनकवाक्यार्थपरिशीलनानुत्पन्नत्वान्न काव्यत्वम्। स्पष्टं शिष्टम्।

**भाषार्थ**—अब काव्य का लक्षण दण्डी कवि के मतानुसार करते हैं। इष्ट अर्थ से युक्त पदकदम्बक को काव्य कहते हैं। इष्ट अर्थात् अलौकिक चमत्कारजनक होने के कारण सहृदयहृदयाह्लादक जो कविनिबद्ध अर्थ, उनसे व्यवच्छिन्न—अलङ्कृत जो पदावली पदसमुदाय, उसे काव्य कहते हैं। 'तेरा शत्रु मर गया' 'तेरे घर पुत्र पैदा हुआ है' इत्यादि वाक्य से उत्पन्न आह्लाद लोकोत्तर नहीं होता। अतः उस पर काव्यत्व की शङ्का ही नहीं करनी चाहिए। इस प्रकार लोकोत्तर चमत्कारजनक होने से जो वाक्य सहृदयों के हृदयों को आकृष्ट करे, वह काव्य समझना चाहिए।

**तन्नाम वाक्यं काव्यं, यत् खलु विलक्षणचमत्कारितया बलादिव वशमानीय सामाजिकमनांसि रञ्जयति। यथा—**

मानुषीभ्यः कथं नु स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥१॥ [अभि० शा० ]
उग्गिरणदब्भकवला मई परिच्चत्तणत्तणा मोरी ।
ओसरिअपांडुपत्ता मुअंति अस्सुं विअ लदाओ ॥२॥ [अभि० शा०]
(संस्कृतम्—उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः ॥ )
अयि कठोर ! यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद् विपिने हरिणीदृशः
कथय नाथ ! कथं बत मन्यसे ॥३॥ [उत्तररा० च०]

एतानि वाक्यानि पाठानन्तरमेव कमपि लोकोत्तरमानन्दं सहृदयानामातन्वन्तीति तेषां काव्यत्वम् ।

इति काव्यनिरूपणं नाम प्रथमशिखा ।

**टीका**—नामेति प्रसिद्धौ। तद् वाक्यं काव्यमुच्यते यत् विलक्षणचमत्कारकारितयाऽलौकिकानन्दजनकतया बलादिव प्रसह्येव वशमानीय सामाजिकानां श्रोतॄणां द्रष्टॄणां वा मनांसि रञ्जयति आह्लादयति । सामाजिकमनांसीति पदं काकाक्षिन्यायेनानयतिरञ्जयत्योः कर्मभूतम् । एतदेव दृष्टान्तत्रयेण विशदयति—यथेति ।

**मानुषीभ्य** इति—अभिज्ञानशाकुन्तलनाटके नाटककटकनासीरे सरस्वतीविलासः कविकुलचूडामणिः कालिदासः शकुन्तलाया अप्सरःसम्भवत्वं समर्थयमान आह—मानुषीभ्य इति । मानुषीभ्यः—मानवीभ्यः, अस्य रूपस्य लोकोत्तरस्येदृशस्य—सौन्दर्यस्य सम्भव उत्पत्तिः कथं केन प्रकारेण नु इति वितर्के स्यात्—जायते । न कथमपि इत्यर्थः । एतदेव समर्थयते—प्रभातरलं क्षणे क्षणे नवं नवं प्रतीयमानं ज्योतिः शकुन्तलावर्तितेजोविशेषः वसुधातलात् महीतलात् भूलोकान्नोदेति न जन्म लभते । केचित्तु—प्रभया दीप्त्या तरलं ज्योतिश्चन्द्रसूर्यात्मकं वसुधातलान्नोदेतीत्यर्थमुत्प्रेक्षन्ते । तन्मते व्यतिरेकिदृष्टान्तेन शाकुन्तलरूपस्य दिव्यत्वसमर्थनं द्रष्टव्यम् । पथ्यावक्त्रम् ॥१॥

**अपरमुदाहरणमाह—उद्गीर्णेति** । शकुन्तलायाः पतिगृहं प्रति प्रस्थानसमये

तदाश्रमस्थतिरश्चामपि तद्वियोगोऽसह्य आसीदिति वदति कविः। उद्गीर्णाः दर्भस्य कवला यया सा तादृशी मृगी जाता। परित्यक्तं नर्तनं यया तादृशी मयूरी समभवत्। किञ्च लता अपि पत्रपातनव्याजेनाश्रूणीव मुञ्चन्तीत्याह—अपसृतानि परित्यक्तानि पाण्डूनि परिणामपीतानि पत्राणि याभिस्ताः अश्रुनेत्राम्भो मुञ्चन्ति पातयन्ति। इति। आर्या वृत्तम् ॥२॥

उदाहरणान्तरमाह—**अयी**ति। उत्तररामचरिते रामं प्रति वासन्ती वदति—हे कठोर! निष्ठुराशय! राम! ते तव यशः कीर्तिः प्रियमभिमतम्, परं किन्तु अतः परमेतस्मादधिकं ननु निश्चयेन घोरं किमयशो वर्तते, गर्भवत्याः सीताया निर्वासनमेव सुमहदपयशः। हे नाथ! स्वामिन्! विपिने वने लक्ष्मणेन त्यक्तायाः हरिणीदृशः मृगलोचनायाः किमचिन्तितं वर्तेति खेदे, मरणरूपमत्याहितमभवत् जातमत्र विषये त्वं कथं मन्यसे चिन्तयसि। मन्मते सा नूनं गर्भवती केनापि नागेन हिंस्रपशुना वा कवलिता चेदभविष्यन्नूनं तव यशोऽभिलाषुकस्य साधु यशः प्रासरिष्यदिति काकुः। द्रुतविलम्बितमत्र वृत्तम् ॥३॥

एतानि पूर्वोक्तानि वाक्यानि पद्यानीति यावत् आस्वाद्यमानानि कमपि लोकोत्तरमलौकिकमानन्दं सहृदयानां चेतस्सु आतन्वन्ति जनयन्ति। ततश्चैतेषां काव्यत्वमव्याहतम्। **अत्रैव** क्रमशः प्रथमपद्ये यदि—शकुन्तला न मानुषी किन्तु दिव्येति, द्वितीयपद्ये—शकुन्तलाया विरहेण तिर्यञ्चोऽपि कष्टायन्ते—इति, तृतीयपद्ये—सीतामरणे तवायशो भविष्यतीति चेद्वचनैरुक्तमभविष्यद्रसोत्पत्त्यभावे काव्यत्वं न स्यादेव। एवमुक्तौ तु रसः सहृदयसंवेद्य आविर्भवत्येवेति प्रत्यक्षमेव विदुषाम्।

**भावार्थ**—वह काव्य कहलाता है, जो विलक्षण चमत्कारी होने से श्रोता सभ्यों के मनों को जबरदस्ती वश में करके उन्हें आह्लादित कर देता है। जैसे—मानुषीष्व इत्यादि। इस अलौकिक शकुन्तला के रूप की उत्पत्ति मनुष्यलोकस्थ स्त्रियों के गर्भ से नहीं हो सकती क्योंकि प्रभा के चाकचिक्य वाली ज्योति भूतल से उदित नहीं होती।

उद्गीर्णेति—मृगी के मुख में जो दर्भ का ग्रास था, वह शकुन्तला के वियोग के दुःख से बाहर निकल आया है। मोरनी अपना नाचना छोड़ बैठी है। और क्या कहें, पत्तों को गिराने के बहाने से लताएँ भी आँसू टपका रही हैं। ओहो! दुःख की पराकाष्ठा है।

अर्थात्—क्यों कठोरहृदय ! राम ! तुम्हें यश तो प्यारा है । माना यश प्यारा है, पर कर्म तुम्हारे उलटे हैं । उनसे यश नहीं मिल सकता । तुमने गर्भवती सीता को लक्ष्मण द्वारा वन में छुड़वा दिया, इससे अधिक और अपयश क्या हो सकता है । उस मृगलोचना का वन में क्या ( अस्वाहित-मरण ) हुआ होगा, तुम इस विषय में क्या कभी विचारते भी हो ? यदि कहीं वह मर गई तो स्त्री-वध के पाप से चौबेजी छब्बे से दुब्बे ही हो जाओगे, लेने के देने पड़ जायँगे, संसार में बड़ा अपयश फैलेगा ।

यह वाक्य पढ़ने के बाद एक प्रकार के अलौकिक आनन्द को सहृदय मनुष्यों के हृदय में उत्पन्न करते हैं, अतः यह काव्य कहलाते हैं ।

| प्रश्नाः— | उत्तराणि— |
| --- | --- |
| (१) काव्यस्य प्रयोजनं वर्णय— | देखो पृ० २ 'काव्यं यशसे...उपदेशयुजे' व्याख्यासहित । |
| (२) काव्यस्य लक्षणं ब्रूहि— | देखो पृ० ४ 'कथ्यते...पदावली' । |
| (३) कीदृशं वाक्यं काव्यं भवति— | पृ० ४ 'तन्नाम...रञ्जयति' । |
| (४) काव्योदाहरणं लिख— | पृ० ५ 'मानुषीभ्य' इत्यादि ३ पद्य । |
| (५) कीदृशे वर्णने शकुन्तलादिव्यत्व-वर्णनं काव्यं न स्यात् ? | देखो पृ० ६ 'अत्रैव' इत्यादि । |

इति प्रश्नोत्तरसहिता प्रथमशिखा समाप्ता ।

---

# द्वितीयशिखा

वाक्यस्वरूपमाह—

**अन्वितैकार्थबोधे तु वाक्यं पदसमुच्चयः ।**

**पदानां प्रत्येकं सार्थकत्वेऽपि तेषामर्थो नान्वितः, वाक्यन्तु तदन्तर्गतपदार्थसमुदितमेकमर्थं बोधयति । यथा—'जननी सुताननं सस्नेहमीक्षते' ।**

**टीका**—अन्वितेति—सुबन्ततिङन्तपदानां पदयोर्वा समुच्चयो वाक्यं भवतीति वाक्यस्य संक्षिप्तं लक्षणम् । किन्तु तदैव पदसमुचयो वाक्यं भवति, यदान्वितैकार्थस्य बोधोऽपि जायते । अन्वितस्य आकाङ्क्षाऽऽसत्तियोग्यतासत्त्वेन परस्परमन्वयं भजमानस्यैकस्यार्थस्य बोधे सत्येव पदसमुचयो वाक्यं भवति, नान्यथेति कारिकार्थः । गौः, अश्वः, महिषः, कन्या, अराजन्, राजधानीत्यादिपदानां प्रत्येकं सार्थकत्वेऽपि तेषां अर्थः परस्परं नान्वितः । ततश्च अस्य पदसमुदायस्य न वाक्यत्वम् । वाक्यन्तु पदसमुच्चयान्तर्गतमेकमर्थं बोधयति । उदाहरणमाह—यथा जननी सुताननं सुतस्य मुखं सस्नेहं स्नेहपूर्वकमीक्षते पश्यतीति व्याख्यार्थः ।

**भाषार्थ**—आकांक्षा, योग्यता और आसत्ति से परस्पर सम्बद्ध एक अर्थ के बोध होने पर पदों के समुदाय को वाक्य कहते हैं ।

गौः, ग्रामः, गोविन्दः—इत्यादि पदों के समुदाय को वाक्य नहीं कह सकते क्योंकि इन पदों में प्रत्येक में तो सार्थकता अवश्य है पर परस्पर में अन्वय नहीं है; अतः यह वाक्य नहीं हो सकता । वाक्य तो वाक्यान्तर्गत पदार्थसमुदायवर्ती एक अर्थ को बतलाता है । जैसे—'माता बेटे के मुख को प्रेम से देख रही है' ।

पदस्वरूपम्—

**'सुप्तिङन्तं पदं' प्राह पाणिनिर्मुनिसत्तमः ॥१॥**

**सुबन्तः तिङन्तश्च शब्दः पदम् । यथा—'रामः', 'भवति' इत्यादि ।**

**टीका**—अतिशयेन सन्निति सत्तमः । मुनिषु सत्तमो मुनिसत्तमः पाणिनिः सुबन्तं तिङन्तं च शब्दस्वरूपं पदत्वेन व्यवहरति । तथाच सूत्रम्—सुप्तिङन्तम् पदम् ।

भावार्थ—मुनियों में श्रेष्ठतम या अत्यधिक विद्वान् पाणिनि मुनि ने सुप्प्रत्ययान्त या तिङ्प्रत्ययान्त शब्दों को पद कहा है। जैसे—रामः, यह सुबन्त पद है। 'भवति' यह तिङन्त पद है।

शब्दविभागः—

शब्दः पुनस्त्रिविधः, यथाह मम्मटभट्टः—

'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा'।

अर्थविभागः—

अर्थोऽपि शब्दप्रतिपाद्यस्त्रिविध एव—वाच्यः, लक्ष्यः, व्यङ्ग्यश्च।

'वाच्यादयस्तदर्थाः स्युः' मम्मटेन यथोदिताः ॥२॥

टीका—अत्र (शास्त्रे) शब्दो वाचको लाक्षणिको व्यञ्जकश्चेति त्रिधेत्यन्वयः। तदर्थाः–तेषां वाचकलाक्षणिकव्यञ्जकशब्दानां प्रतिपाद्या अर्थाः क्रमशः वाच्य-लक्ष्यव्यङ्ग्यरूपास्त्रिविधा भवन्ति। तिस्रो विधाः भेदो यस्य स त्रिविध इति समासः। स्पष्टमन्यत्।

भावार्थ—शब्द तीन प्रकार का होता है, जैसा मम्मट भट्ट ने कहा है। इस शास्त्र में वाचक, लाक्षणिक और व्यञ्जक रूप से शब्द तीन प्रकार का होता है। वाच्यादि उन शब्दों के अर्थ हैं, जैसा कि मम्मटाचार्य ने लिखा है। शब्द से प्रतिपाद्य अर्थ भी वाच्य, लक्ष्य और व्यङ्ग्य भेद से तीन प्रकार का है।

वाचकादीनां क्रमेण स्वरूपमाह—

'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः' ॥३॥

[मम्मटः]

साक्षात् संकेतितस्तु 'अस्मात् शब्दादयमर्थो बोद्धव्यः' इति शब्दस्य स्वाभाविकया शक्त्या व्याकरणादिना वा नियन्त्रितः। इयमेव शक्तिः 'अभिधा' इत्युच्यते। अनया बोध्योऽर्थः वाच्यः, स च साक्षात् बोध्यत्वेन प्रधानतया मुख्यार्थ इत्यप्यभिधीयते। यथा—गोशब्दोऽभिधया गलकम्बलादिमज्जीवविशेषरूपं, पाचक-शब्दश्च पाककर्तृरूपं चार्थं साक्षात् बोधयति।

( * शब्दस्य स्वाभाविकीं शक्तिं सर्वे नाद्रियन्ते, रूढि(ढ)-सम्मतिरेव शब्दानामर्थवाचने हेतुरिति केचिदाचक्षते । तथाच अभिधापि तन्मते लक्षणाव्यञ्जने इव आरोपितैवेत्यलमतिगहनाव-गाहनेन । )

**टीका**—यः शब्दः संकेतितमर्थं साक्षादव्यवधानेन वृत्त्यन्तरव्यवधानराहि-त्येन बोधयति स शब्दो वाचक उच्यते । साक्षात् संकेतितश्च स शब्दो भवति यः 'अयं शब्दोऽत्रार्थे वाचकः' इत्येवं रूपया नैसर्गिकशक्त्या व्याकरणादिना वा नियमितो भवति कस्मिंश्चिदर्थे । अत्र व्याकरणादिनेत्यादिपदेनोपमानादयो गृह्यन्ते । तदुक्तम्—

'शक्तिग्रहं व्याकरणोपमानकोषाऽऽप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥' इति ।

तत्र व्याकरणात्, यथा—पाचक इत्यादि । उपमानात्, यथा—गोसदृशो गवय इत्यादि । कोषात्, यथा—'विनायके विघ्नराज-द्वैमातुरगणाधिपाः' इत्यादि । आप्तवाक्यात्, यथा—अयमश्वशब्दवाच्य इत्यादि । व्यवहारात्, यथा—वृद्धेन युवानमुद्दिश्य 'गामानय' इत्युक्ते, तं गवानयनप्रवृत्तं दृष्ट्वा बालोऽस्य वाक्यस्य सास्नादिमत्पिण्डाऽऽनयनमर्थं प्रथममवधारयति, ततो 'गां बधान, अश्वमानय' इत्युक्ते, तथा कुर्वाणं युवानमवलोक्य गोशब्दस्य सास्नादिमत्पिण्डरूपमर्थम्, आन-यनशब्दस्य चाऽऽहरणरूपमर्थमावापोद्वापाभ्यां पृथगवधारयतीत्यादि । सिद्धपद-सान्निध्यात्, यथा—'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादि । अत्र कमलोदरे मधुपानकर्तृत्वं भ्रमरस्यैवेति मधुकरशब्दो भ्रमरमेव बोधयति, न सरघा-मिति द्रष्टव्यम् । वाक्यस्य शेषात्, यथा—'यवमयश्चरुर्भवति' इति वाक्ये—'यव-शब्दः किं वासन्तशस्यविशेषबोधकः ? उत यावनिकप्रसिद्धकङ्गुनामकशस्यविशेष-बोधकः ?' इति संशये तद्वाक्यशेषे—'वसन्ते सर्वशस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥' इति वाक्यशेषात् वसन्तऋतूद्भव-यवमेव बोधयतीत्यादि । विवृतेः—विवरणात्, यथा—रामो दाशरथिरित्यादि । नियन्त्रित इत्यस्य नियमित इत्यर्थः । अभिधाशक्तिप्रतिपाद्यमर्थमेव वाच्यमाहुः । अयमेव च मुख्यार्थोऽप्युच्यते । गलकम्बलः–सास्ना । सास्नावती च गौरेव भवति । पाचकशब्दश्च व्याकरणबलेन पाककर्तृरूपमर्थं बोधयति । शब्दस्येत्यारभ्यावगाहनेनेत्यन्तो भागोऽस्मन्मते न ग्रन्थांशभूतः 'स्वाभाविक्या

शङ्कया' इति मूलोक्तग्रन्थस्य टिप्पणभूतो ग्रन्थमध्ये रभसाऽऽयातः प्रतीयते नाप्ययं वाद आकरे स्थितः । तस्य लापनन्तु एवं कर्तव्यम्—सर्वेऽप्यालङ्कारिकाः शब्दस्य स्वाभाविकीं शक्तिमभिधाऽभिधां न मन्यन्ते किन्तु ते वदन्ति—किमभिधया रूढा निरूढा प्रख्याता सम्मतिर्लोकसम्मतिः—शब्दानामर्थस्य वाचने बोधने हेतुरस्तीति आचक्षते वदन्ति । अर्थात् अभिधाशक्तिर्न मन्तव्या किन्तु यमर्थं दश पञ्चदश वा जना मिलित्वा येन शब्देन व्याहरेयुः, स शब्दस्तत्र वाचकः, तदर्थश्च वाच्य इत्येवमभिधां विना लोकसिद्धसम्मत्यैव कार्यं निर्वोढव्यम् । एवं च सति केषांचिन्मते लक्षणाव्यञ्जने वाभिधाऽपि आरोपितैव न स्वाभाविकी शक्तिरिति । वयन्तु ब्रूमः—रूढसम्मतिरिति नामान्तरमेवाभिधाया इति मतमिदमसङ्गतमिति न क्षोदक्षमं प्रेक्षावताम् । अयं च कोष्ठान्तर्गतः पाठो मूले टिप्पणे वा न स्थापनार्ह इति ।

**भाषार्थ**—सङ्केतित अर्थ को जो साक्षात् अन्य वृत्तियों के व्यापार के बिना बतावे, उसे वाचक कहते हैं। तथा साक्षात् संकेतित (संकेत वाला) शब्द 'इस शब्द से यह अर्थ समझना चाहिये' इस प्रकार की स्वाभाविक शक्ति से अथवा व्याकरण आदि से किसी अर्थविशेष में नियमित होता है । इस शक्ति का ही नाम अभिधा है । इस अभिधा शक्ति से बोध्य अर्थ 'वाच्य' कहलाता है । तथा क्योंकि यही अर्थ साक्षात् बोध्य होता है, अतः इस अर्थ को मुख्यार्थ भी कहते हैं। जैसे—गो शब्द अभिधाशक्ति से गलकम्बल (सास्ना) वाले जीव विशेष (गौ) को बतलाता है तथा 'पाचक' शब्द 'पकाने वाला' इस अर्थ को साक्षात् बतलाता है । ( शब्द की स्वाभाविक अभिधा नाम की शक्ति को कोई नहीं मानते, किन्तु लोकसिद्ध सर्वसम्मति से ही काम लेना चाहिए, उसी से अर्थ प्रतीति होती है, ऐसा कहते हैं । इस मत में अभिधा शक्ति भी लक्षणा, व्यञ्जना के समान आरोपित अस्वाभाविक ही शक्ति है ।) वस्तुतः यह मत आदर योग्य नहीं क्योंकि रूढसम्मति कहें या अभिधा, बात एक ही है । शब्दमात्र में विवाद है । अतः यह कोष्ठान्तर्गत मूल ग्रन्थ या टिप्पण अयुक्त है ।

**लक्षणया अर्थबोधकः शब्दो लाक्षणिकः । तथा बोध्योऽर्थः लक्ष्यः ।**

लक्षणास्वरूपमाह—

'मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता' ॥४॥

[ विश्वनाथः ]

मुख्यार्थस्य अन्वयानुपपत्तिग्रहे तदर्थसम्बन्धी अन्योऽर्थः रूढिप्रयोजनयोरन्यतरस्मिन् हेतौ सम्भवति यया प्रतीयते, सा वृत्तिर्लक्षणा नाम । रूढिः—प्रसिद्धिः । यथा—'कलिङ्गः साहसिकः' इत्यत्र कलिङ्गशब्दो देशविशेषरूपे स्वाभिधेयेऽर्थेऽसम्भवन् तद्देशवासिनः पुरुषान् बोधयति । प्रसिद्धिश्च अत्र हेतुः । 'गङ्गायां घोषः' इत्यत्र च गङ्गाशब्दः प्रवाहविशेषरूपं स्वाभिधेयमर्थं बोधयितुमसमर्थः सामीप्यसम्बन्धसम्बन्धिनं तटं बोधयति । हेतुश्चात्र शीतत्वपावनत्वातिशयबोधनरूपं प्रयोजनम् ।

उपकृतं बहु तत्र किमुच्यते ? सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम् ॥४॥

इयं हि कञ्चिदपकारिणं प्रत्युक्तिरिति मुख्यार्थस्यान्वयानुपपत्तेः वैपरीत्यसम्बन्धेन अपकारादिरूपमर्थं ज्ञापयति । अपकाराऽऽद्यतिशयद्योतनञ्चात्र प्रयोजनम् ।

**टीका**—लक्षणायेत्यादि स्पष्टम् । मुख्येत्यादि—मुख्यार्थस्य साक्षात् संकेतितस्य बाधेऽसंभवे, अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वाऽसंभविनि सति तेन मुख्यार्थेन युक्तः सम्बद्धोऽन्योऽर्थोऽभिधाभिन्नोऽर्थः प्रतीयते विज्ञायते तत्र च कारणं रूढिः प्रयोजनं वा भवेत् असौ अर्पिता मुख्यार्थत्यागवती शक्तिर्लक्षणाऽऽख्या भवतीति कारिकार्थः । मुख्यार्थस्यान्वयो न संभवतीत्येवंरूपेण शाब्दान्वयस्य तात्पर्यान्वयस्य वाऽनुपपत्तिग्रहेऽनुपपत्तिपरिज्ञाने सति रूढिप्रयोजनयोर्मध्ये एकतरस्मिन् हेतौ संभवति यया वृत्त्याऽन्योऽर्थः प्रतीयते सा वृत्तिर्लक्षणाख्या वर्तते । स्वाभिधेये—स्वेन कलिङ्गशब्देनाभिधेये । स्वाभिधेयम् गङ्गाशब्दाभिधेयम् । स्वसामीप्यसम्बन्धसम्बन्धिनम्—स्वस्या गङ्गायाः सामीप्यं नित्यसंयोगस्तेन सम्बन्धेन सम्बन्धिनं सम्बन्धवन्तं तटं बोधयति । हेतुः—लक्षणायां हेतुरित्यर्थः । स्पष्टमन्यत् ।

उपकृतमिति—कस्यचित् कञ्चिदपकारिणं प्रत्युक्तिरियम्। हे मित्र! भवता बहु उपकृतम्। यच्चोपकृतं तदेतावदस्ति यत्तस्य विषये किमपि वक्तुं न शक्यते। भावार्थस्तु त्वया पयोमुखेन विषकुम्भेन मनागपि नोपकृतमतस्तवोपकारचर्चाविषये किमपि वक्तुं न शक्यते। भवता त्वया सुजनता सौजन्यव्यवहारः प्रथिता प्रख्यापिता, तव दौर्जन्यं लोकप्रसिद्धमित्यर्थः। हे सखे! सदा ईदृशमेव विदधत् कुर्वन् क्षणमप्येवं न कुर्वन्नित्यर्थः। ततो विधानानन्तरं शरदां शतं शतवर्षाणि यावत् सुखितं सुखपूर्वकं आस्स्व तिष्ठ, इदानीमेव म्रियस्वेति विपरीतलक्षणा प्रयोजनवती। अपकारातिशय-द्योतनरूपं प्रयोजनम्। अत्र पद्ये द्रुतविलम्बितं वृत्तम्। स्पष्टमन्यत् ॥४॥

**भाषार्थ**—लक्षणा से अर्थ को बताने वाला शब्द लाक्षणिक कहाता है। तथा लक्षणावृत्ति से बोध्य अर्थ को लक्ष्य कहते हैं।

दर्पणकार विश्वनाथ लक्षणा का लक्षण करते हैं कि—मुख्यार्थ के बाध होने पर मुख्यार्थ से सम्बद्ध अर्थ जिस वृत्ति से रूढि या प्रयोजन के वश से प्रतीत होता है, वह ( अर्पिता ) मुख्यार्थ को परित्याग करने वाली शक्ति लक्षणा कहलाती है। मुख्यार्थ का अन्वयानुपपत्ति—सम्बन्धान्वयानुपपत्ति या तात्पर्यान्वयानुपपत्ति के ज्ञान होने से बाध होने पर जिसके कारण मुख्यार्थसम्बन्धी मुख्यार्थभिन्न अर्थ, रूढि और प्रयोजन में से किसी एक कारण के होने पर प्रतीत हो, वह लक्षणा नामक वृत्ति कहलाती है। रूढि शब्द का अर्थ प्रसिद्धि है। जैसे—'कलिङ्ग साहसिक (साहसी, वीर, पराक्रमी) है। यहाँ पर कलिङ्ग शब्द देशविशेषात्मक अपने वास्तविक अर्थ में सम्भव न होता हुआ कलिङ्गदेशवासी पुरुषों को बोधित करता है और प्रसिद्धि इसमें कारण है। 'गङ्गायां घोषः' ( गङ्गा में घोष है ) यहाँ पर गङ्गा शब्द प्रवाहविशेषात्मक अपने मुख्यार्थ को बोधन कराने में असमर्थ हुआ सामीप्य सम्बन्ध से सम्बन्धी तट का बोधन कराता है। इस बोधन कराने में शीतत्व तथा पावनत्व के आधिक्य को बतलाना रूपी प्रयोजन ही कारण है।

प्रयोजनमूला लक्षणा का दूसरा उदाहरण यह है—

हे मित्र! आपने मेरे साथ बहुत उपकार किये हैं ( अर्थात् एक भी उपकार नहीं किया ), आपका सौजन्य जगद्विख्यात है ( अर्थात् आपका दौर्जन्य सब को मालूम है ), हमेशा ऐसा ही करते हुए ( एक भी दिन ऐसा न करते हुए) सौ शरदृतुपर्यन्त अर्थात् सौ वर्ष तक जीओ ( अर्थात् आज ही

मर जाओ )। यह अर्थ विपरीत लक्षणा से बोधित होता है।

यह किसी अपकारी के प्रति उससे अपकृत की उक्ति है। अत: मुख्यार्थ का अन्वय न हो सकने के कारण वैपरीत्य सम्बन्ध से अपकारादि रूप अर्थ को बोधन कराती है। अपकारातिशय का बोधन कराना प्रयोजन है।

लक्षणाविभागः—

**इत्येवं सा द्विविधा रूढिमूला प्रयोजनमूला च।**
**सेयं पुनर्द्विधा स्यादुपादानं लक्षणश्चेति ॥५॥**

उपादानलक्षणा, लक्षणलक्षणा चेति सा लक्षणा पुनर्द्विविधा।

उपादानलक्षणा—

**स्वसिद्धये पराऽऽक्षेपेऽसावुपादानलक्षणा।**

वाच्यार्थस्य अन्वयसिद्ध्यर्थं लक्ष्यार्थस्य बोधने वाच्यार्थस्यापि उपादानादियमुपादानलक्षणा। यथा—'यष्टयः प्रविशन्ति' इत्यत्र यष्टीनां स्वतः प्रवेशक्रिययाऽन्वयासम्भवात् प्रवेशान्वयार्थं ससंयोगिनः पुरुषा आक्षिप्यन्ते। अत्र च स्वार्थस्यापरित्यागात् इयम् 'अजहत्स्वार्था' इति च कथ्यते।

लक्षणलक्षणा—

**परार्थमात्रबोधे तु भवेल्लक्षणलक्षणा ॥६॥**

सर्वथा स्वार्थपरित्यागेनान्यार्थमात्रबोधने इयं लक्षणलक्षणा। अत एवासौ 'जहत्स्वार्था' इति च भण्यते। यथा पूर्वोदाहृते—'उपकृतं बहु तत्र' इत्यादौ।

इत्येवम्—एवं प्रकारेण सा द्विविधा—रूढिमूला, प्रयोजनमूला च। उपादानमित्यस्योपादानलक्षणेत्यर्थः। लक्षणमित्यस्य लक्षणलक्षणा चेत्यर्थः। अन्यत् स्पष्टम्। आर्यावृत्तमिदं संग्रहीतृकल्पितम्। स्वेत्यादि—स्वस्य वाच्यार्थस्य सिद्धयेऽन्वयसिद्धये, परस्य लक्ष्यार्थस्याक्षेपे आक्षेपगम्ये सति उपादानलक्षणा भवतीति

कारिकार्थः। स्वसंयोगिनः—यष्टिसंयोगिनः। जहत् स्वं यं स जहत्स्वस्तादृशोऽर्थो यस्यां सा जहत्स्वार्था, न जहत्स्वार्थाऽजहत्स्वार्थेति नागेशः।

परार्थेत्यादि—परस्यान्यस्य लक्ष्यमात्रस्यार्थस्य बोधे तु लक्षणलक्षणा भवेत्। शिष्टं स्पष्टम्।

लक्षणाविभाग—

**भाषार्थ**—इस प्रकार वह लक्षणा दो प्रकार की होती है—रूढिमूला और प्रयोजनमूला। यह फिर दो प्रकार की होती है—उपादानलक्षणा तथा लक्षण-लक्षणा। उपादानलक्षणा तथा लक्षणलक्षणा भेद से लक्षणा दो प्रकार की होती है।

उपादानलक्षणा—

स्वसिद्धि के लिए अर्थात् वाच्यार्थ की उपपत्ति के लिये पर=लक्ष्यार्थ का आक्षेप होने पर उपादान लक्षणा होती है। वाच्यार्थ की अन्वयसिद्धि के लिये लक्ष्यार्थ का बोधन होने पर वाच्यार्थ का भी उपादान (ग्रहण) किया जाने के कारण यह उपादान लक्षणा होती है। जैसे—'लाठियाँ प्रविष्ट होती हैं' यहाँ पर लाठियों का अचेतन होने से स्वयं प्रवेशनक्रियाकर्तृत्व असम्भव है। अतः प्रवेशान्वय के लिये स्वसंयोगी=यष्टिसंयोगी पुरुषों का आक्षेप किया जाता है। यहाँ पर स्वार्थ का परित्याग न करने के कारण इस उपादान लक्षणा को 'अजहत्स्वार्था' इस नाम से भी पुकारते हैं।

लक्षणलक्षणा—

केवल परार्थ का बोध कराने पर लक्षणलक्षणा होती है। स्वार्थ का सर्वथा परित्याग कर देने पर केवल अन्यार्थ का बोधन कराने से लक्षणलक्षणा होती है। अतएव इसे जहत्स्वार्था भी कहते हैं। जैसे—पूर्वोक्त 'उपकृतं बहु तत्र' इत्यादि पद्य (४) है।

**व्यञ्जनयाऽर्थबोधकः शब्दः व्यञ्जकः, तया बोध्योऽर्थो व्यङ्ग्यः।**

व्यञ्जनास्वरूपमाह—

**'विरतास्वभिधाऽऽद्यासु ययाऽर्थो बोध्यतेऽपरः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च' ॥७॥**

[ विश्वनाथः ]

अभिधायां, लक्षणायाञ्च स्वं स्वमर्थं बोधयित्वा विरतायां यथाऽपरोऽर्थो बोध्यते, सा वृत्तिर्व्यञ्जना नाम।

व्यञ्जनाविभागः—

शब्दवदर्थोऽपि अर्थान्तरव्यञ्जकः, इति प्रथमतो द्विविधा व्यञ्जना—शाब्दी, आर्थी च।

शाब्दीव्यञ्जनाभेदौ—

शाब्दी च द्विविधा—अभिधामूला, लक्षणामूला च। यथाऽऽह विश्वनाथः—

'अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा' ॥८॥

**टीका**—विरतेत्यादि—अभिधालक्षणातात्पर्याख्यासु वृत्तिषु विरतासु स्वार्थबोधनेनोपक्षीणव्यापारासु यया वृत्त्याऽपरोऽर्थो बोध्यते ज्ञाप्यते, सा वृत्तिर्व्यञ्जना नाम व्यञ्जनेत्याख्या वर्तते। सा च शब्दस्यार्थादिकस्य च भवति-इति व्यञ्जना शब्दमूलाऽर्थमूलेति द्विविधा प्रोच्यते। अभिधायास्विति बहुवचनं तात्पर्याख्यवृत्तिस्वीकारेण। अर्थादिकस्येत्यादिपदेन प्रकृतिप्रत्ययोपसर्गादीनां ग्रहणम्। तथा च शब्दस्यार्थादिकस्य च सा वृत्तिः (शक्तिः) व्यञ्जना नाम, व्यञ्जनाख्या भवतीति कारिकार्थः। अभिधेति—शब्दस्य व्यञ्जनाऽभिधामूला लक्षणामूला चेति द्विधा भवतीत्यर्थः। स्पष्टमन्यत्।

**भाषार्थ**—व्यञ्जनावृत्ति से अर्थ का बोधक शब्द व्यञ्जक कहलाता है। तथा उस वृत्ति से बोध्य अर्थ व्यङ्ग्य कहा जाता है।

व्यञ्जना का स्वरूप कहते हैं—

अभिधा, लक्षणा, तात्पर्य नामक वृत्तियों के शान्त होने पर जिस वृत्ति से दूसरा अर्थ बोधित किया जाता है, वह शब्द तथा अर्थ के प्रकृति प्रत्ययादि में रहने वाली शक्ति व्यन्जना नाम से कही जाती है। अभिधा तथा लक्षणा के अपना अपना अर्थ बोधन कराके शान्त हो जाने पर जिससे दूसरा अर्थ बोधित किया जाता है, उस वृत्ति का नाम व्यन्जना है। यहां पर इन दो वृत्तियों का ही नाम लेना तात्पर्याख्यवृत्ति का उपलक्षण समझना चाहिए। यह तात्पर्याख्यवृत्ति परस्पर पदों का कर्मत्व कर्तृत्व रूप से अन्वय कराती है।

अतः माननी चाहिए, यह भट्ट कुमारिल का मत है। जो अन्वित का ही अभिधान मानने वाले अन्विताभिधानवादी प्रभाकर ( गुरु ) प्रभृति हैं, वे इस वृत्ति को नहीं मानते।

व्यञ्जना विभाग—

शब्द के समान अर्थ भी अर्थान्तर का व्यञ्जक होता है। इसलिए सब से प्रथम व्यञ्जना के दो भेद हैं—शाब्दी व्यञ्जना तथा आर्थी व्यञ्जना।

शाब्दी व्यञ्जना भेद—

शाब्दी व्यञ्जना दो प्रकार की है—अभिधा मूला, तथा लक्षणामूला। जैसा विश्वनाथ ने साहित्यदर्पण में लिखा भी है—अभिधामूला तथा लक्षणामूला इस प्रकार शाब्दी व्यञ्जना दो प्रकार की होती है।

अभिधामूलां व्यञ्जनामाह विश्वनाथः—

'अनेकार्थस्य शब्दस्य संयोगाऽऽद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाऽऽश्रया' ॥९॥

संयोगाऽऽद्याश्च—

'संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥'

यथा—'सशङ्खचक्रो हरिः' इति शङ्खचक्रसंयोगेन हरिः—विष्णुः। 'फणहीनो नागः' इति फणवियोगेन नागः—सर्पः। 'रामलक्ष्मणौ' इति लक्ष्मणसाहचर्य्येण रामः—दाशरथिः। 'रामार्जुनौ' इत्यत्र विरोधितया रामः—भार्गवः, अर्जुनः—कार्त्तवीर्यः। अर्थः—प्रयोजनम्। यथा—'स्थाणुं भज भवच्छिदे' इति भवच्छेदरूपप्रयोजनसम्बन्धेन स्थाणुः—शिवः, न तु शाखा-विहीनो वृक्षः। प्रकरणम्—प्रस्तावः। यथा—'यथाऽऽज्ञापयति देवः' इति देवः—भवान्, राजा वा। लिङ्गम्—विशेषकं चिह्नम्। यथा—'कपर्दी भीमः' इति कपर्देन विशेषकेण भीमः—शिवः।

अन्यस्य—प्रसिद्धार्थकस्य, शब्दस्य सन्निधिः—समभिव्याहारः। यथा—'स्थलारविन्दश्रियम्' इत्यत्र स्थलारविन्दसन्निधानेन श्रीः—शोभा। सामर्थ्यम्—शक्तिः। यथा—'मधुना मत्तः कोकिलः' इति मधुः—वसन्तः, तस्यैव कोकिलमादने सामर्थ्यात्। औचिती—युक्तता। यथा—'गौरेका तु मनस्विनः' इत्यत्र औचित्येन गौः—वाक्। 'भाति गगने चन्द्रः' इति गगनरूपेण देशेन चन्द्रः—शशाङ्कः। 'रात्रौ विभावसुः' इति विभावसुः—वह्निः; दिवसे तु सूर्यः। व्यक्तिः—स्त्रीपुंस्त्वादिकम्। यथा—'मित्रं भाति' इति नपुंसकलिङ्गेन मित्रम्—बन्धुः। 'मित्रो भाति' इति मित्रः—सूर्यः। स्वराः—उदात्ताऽऽदयो वेद एव प्रसिद्धाः।

इत्थं संयोगादिभिरेकस्मिन्नर्थे नियमिते—अर्थान्तरबोधनप्रतिरोधेन तन्मात्रे एव व्यवस्थापिते, यया अर्थान्तरं बोध्यते, सा अभिधामूला व्यञ्जना। यथा—

कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥५॥

[कुमारस०]

आच्छादिताऽऽयतदिगन्तरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालश्रृङ्गम्।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम्? ॥६॥

[शिशुपालवधम्]

प्रथमे—दक्षिणाशब्दस्य प्रकरणवशात् तदभिधानदिग्रूपेऽर्थे नियमिते, व्यञ्जनया दाक्षिण्यशीलनायिकारूपोऽर्थः, द्वितीये च—नगेशशब्दस्य प्रकरणेन रैवतकपर्वतरूपेऽर्थे नियमिते, व्यञ्जनया शिवरूपोऽर्थो बोध्यते।

टीका—अनेके अर्था यस्य तस्य तादृशस्य शब्दस्य संयोगाद्यैः—संयोग आद्यो येषु तैः एकत्रैकस्मिन्नर्थे नियन्त्रिते निश्चितेऽवधारिते सति अन्यस्यार्थस्य धियाः ज्ञानस्य हेतुर्या व्यञ्जना साऽभिधाश्रया व्यञ्जनेति कारिकार्थः। संयोगाद्येत्यत्राद्यपदसंग्राह्यानाह—

संयोग इत्यादिप्राचीनाभियुक्तकारिकया । संयोगादीनामर्था मूल एव स्फुटीभविष्यन्त्यस्मत्कृतभाषाटीकायाञ्च । शब्दार्थस्य=अनेकार्थकशब्दे प्रयुक्ते कोऽर्थः कवेरभिमत इत्यनिश्चये सति विशेषस्यार्थस्य स्मृतिहेतवो बोधका इत्यर्थः । इत्थमित्यादि—नियमिते=निश्चिते इत्यर्थः । तदेवाह—अर्थान्तरेत्यादिना ।

कुबेरेत्यादि—कुमारसंभवे मारस्य मारारिविजयप्रस्थानसमयेऽकालागत-वसन्तऋत्वागमवर्णनमिदम्—उष्णरश्मौ तिग्मदीधितौ समयं स्वकालं विलङ्घ्य अति-क्रम्य कुबेरेण गुप्तां पालितां दिशमुत्तरां दिशमिति यावत्, गन्तुं प्रवृत्ते—सूर्ये उत्तरायणे बुभूषतीत्यर्थः । दक्षिणा दिक् ( नायिका ) गन्धवहं मलयानिलं व्यलीकनिःश्वासमिव उत्तरा दिक् प्रतिनायिकागृहोपस्थानकालिकमात्मतिरस्कारसूचकं दीर्घमुष्णं च निःश्वास-मिव मुखेनाननेन स्वभागतश्चोत्ससर्ज तत्याज । अत्र सूर्ये उत्तरायणे जाते मलयानिलो ववौ—इति भावार्थः । तथाच वसन्तस्य पूर्णावतारः सूचितः । अत्रोक्त-रीत्या—प्रकरणबलात् सूर्य-धनद-दक्षिणदिग्भागाद्यर्थे क्रमशः उष्णरश्मि-कुबेर-दक्षिणदिग्-मुखादीनां शब्दानां नियन्त्रितेऽपि व्यञ्जनया उष्णरश्मिऽ-शब्दस्य साहसिकरूपोऽर्थः, कुबेरशब्देन कुरूपरूपोऽर्थः, गुप्तामित्यनेन जनान्तर-नेत्रागोचरतारूपोऽर्थः, दिग्दक्षिणाशब्देन शालीननायिकारूपोऽर्थः, मुखेनाऽऽ-स्यादिरूपोऽर्थश्च व्यज्यते इति यथायथमूह्यम् । उपजातिवृत्तम् ॥५॥

उदाहरणान्तरमाह-**आच्छादिते**त्यादि । माघे रैवतकवर्णनाद्गृहीतमिदं पद्यम् । आच्छादितं व्याप्तमायतं दिगन्तरं येन तम्, गां पृथ्वीमाक्रम्य अवष्टभ्य संस्थितं विद्यमानम्, उच्चकैरुन्नतं भूतं, उदग्राणि उन्नतानि विशालानि पृथ्वायतानि शृङ्गाणि यस्य तम्, मूर्ध्नि शिरसि स्खलन् पतन् तुहिनदीधितेश्चन्द्रमसः कोटिरग्ररश्मिर्यस्य तम्, तादृशमेनं नगानां शिखरिणामीशं स्वामिनं रैवतकमुद्वीक्ष्य विलोक्य को न विस्मयते चित्रीयते । सर्वोऽपि लोकश्चकितो भवतीत्यर्थः ॥६॥

अत्र प्राकरणिकोऽर्थः प्रोक्त एव । व्यङ्ग्यार्थस्तु शिवरूपो मूर्धशब्देन शिरोरूपे, उदग्रविशालशृङ्गं गां गोबलीवर्दं आक्रम्य स्थितम् आरूढं दिग्वाससं मूर्ध्नि शिरसि स्खलत्तुहिनदीधितिकोटिं चञ्चच्चन्द्राग्रभागं, नगेशं पर्वतराज्यस्वामिनं शिवं वीक्ष्य को न विस्मयते चमत्करोति—ईदृशस्य राज्ञः क्वचिदप्यभावादित्यर्थः । अयं चार्थोऽ-भिधायकशब्दमहिम्ना प्रतीयते इति व्यञ्जनेयमभिधामूला । टीकाया व्याख्या तु स्पष्टेति न व्याख्यानमर्हति ।

**भावार्थ**—अनेक अर्थ वाले शब्द का संयोग आदि के कारण किसी एक अर्थ के नियन्त्रित होने पर अन्य—व्यङ्ग्यरूप अर्थ को प्रकट करने वाली वृत्ति अभिधामूलक व्यञ्जना कही जाती है। संयोगादि निम्नलिखित हैं—

संयोग, वियोग, साहचर्य, विरोध, अर्थ, प्रकरण, लिङ्ग, अन्य शब्द की सन्निधि, सामर्थ्य, औचित्य, देश, काल, व्यक्ति ( स्त्रीलिङ्गादि ) और स्वरादि। यह सब किसी एक अर्थ के निश्चय न हो सकने पर विशेष एक अर्थ की स्मृति—बुद्धि करा देते हैं अर्थात् अर्थनिश्चय करा देते हैं। जैसे—'शङ्खचक्रसहित हरि' इस वाक्य में यदि शङ्खचक्रसहित यह विशेषण न दें तो हरि शब्द का क्या अर्थ है, यह निश्चय नहीं हो सकता क्योंकि हरि शब्द के मेंढक ( डड्डू ), सिंह, बन्दर, विष्णु आदि अनेक अर्थ हैं। शङ्ख चक्र सहित यह कह देने से विष्णु का ही ग्रहण होता है। यह शङ्खादि का संयोग है। 'फणा से रहित नाग' ऐसा कहने से साँप ही नाग का अर्थ है, हाथी नहीं। यह वियोग का उदाहरण है। 'राम लक्ष्मण' यहाँ लक्ष्मण के साहचर्य से दशरथपुत्र ही राम लिये जाते हैं, परशुराम या बलराम नहीं। 'राम और अर्जुन' यहाँ परस्परविरोधी होने के कारण राम से परशुराम ( भार्गव ) अर्जुन पद से कार्तवीर्य का ग्रहण होता है। अर्थ—प्रयोजन। जैसे—'भव ( संसार ) के नाश ( अदर्शन ) के लिये स्थाणु ( शिव ) को भजो' यहाँ संसारोच्छेद रूपी प्रयोजन के सिद्ध करने के कारण स्थाणु पद से शिवजी का ग्रहण किया जाता है, ठूँठ का नहीं। प्रकरण—प्रस्ताव। जैसे—'जो देवपादों की आज्ञा' यहाँ देव पद से 'आप' या 'राजा' का ग्रहण होता है। अतः 'जो आपकी आज्ञा' यह अर्थ होता है। लिङ्ग—व्यावर्तक चिह्न विशेष। जैसे—जटाजूट ( कपर्द ) वाला भीम। यहां भीम पद से शिवजी लिये जाते हैं, पाण्डव नहीं। अन्य—प्रसिद्धार्थक शब्द का समीप में प्रयोग। जैसे—'स्थल-कमल की श्री' यहां श्री पद से शोभा का ग्रहण होता है, लक्ष्मी का नहीं। सामर्थ्य—शक्ति। जैसे—'कोयल मधु से मस्त है' यहां मधु पद से वसन्त ऋतु ली जाती है, मद्य नहीं। क्योंकि वसन्त ऋतु में ही कोयल को मस्त करने की शक्ति है। औचिती—औचित्य, वाजिबपना। जैसे—'मनस्वी की गौ एक ही होती है' यहां गौ पद का अर्थ वाणी है, गाय नहीं। 'आकाश में चन्द्र शोभित होता है' इस वाक्य में चन्द्र पद का अर्थ चन्द्रमा ही लिया जाता है, कपूर नहीं। क्योंकि आकाश देश में चन्द्रमा ही रह सकता है।

'रात्रि में विभावसु चमकता है' यहां विभावसु शब्द का अर्थ अग्नि है। क्योंकि रात्रि में सूर्य नहीं होता। 'दिवस में विभावसु शोभा देता है' यदि यह वाक्य बोला जाय तो यहां विभावसु का अर्थ सूर्य ही लिया जायगा। यह काल का उदाहरण है। व्यक्ति—स्त्रीलिङ्गता या पुँल्लिङ्गता। 'जैसे—'मित्रं भाति' यहां मित्र नपुंसकलिङ्ग शब्द है। अतः दोस्त को बतलाता है। 'मित्रः' ऐसा यदि यहां पुँल्लिङ्ग प्रयोग करें तो मित्र शब्द का सूर्य अर्थ होता है। स्वर—उदात्त, अनुदात्त और स्वरित। इनका उदाहरण वेद में मिल सकता है, लोक में नहीं। स्वर से तत्पुरुषादि में से कौन-सा समास है, यह पता चल जाता है। इस प्रकार संयोगादि से एक अर्थ के नियमित हो जाने पर अर्थान्तर का ज्ञान नहीं होने पाता तथा एकमात्र वही अर्थ व्यवस्थापित हो जाता है। ऐसा होने पर जिस शक्ति से दूसरा अर्थ बलात् प्रतीत होता है, उसका नाम अभिधामूला व्यञ्जना है। जैसे—यह आकस्मिक वसन्तागम का वर्णन है। जब सूर्य भगवान् अपने समय ( प्रतिज्ञा ) और काल को छोड़कर कुबेरपालित उत्तर दिशा की ओर चलने को उद्यत हुए तो दक्षिणदिशा ने मलमानिल को छोड़ा मानो उस दिशा की यह दुःख की लम्बी २ साँस थी कि सूर्य मुझे छोड़ चले। भाव तो यह है कि सूर्य उत्तरायण हुआ और मलयवायु बहने लगी। इस प्रकार वसन्त ऋतु के साज सजने लगे। किन्तु इसके बाद दक्षिण दिशा रूप नायिका ने जब देखा कि मेरा साहसी नायक कुत्सित शरीर से अधिकृत किसी कामुकी से मिलने चला तो वह अपने मुख से दुःख की आहें निकालने लगी। यह अर्थ अभिधामूला व्यञ्जना से प्रतीत होता है। इसका दूसरा उदाहरण यह है—आच्छादितेत्यादि। आच्छादित कर दिया है लम्बे चौड़े दिग्विभाग को जिसने ऐसे, ऊँचे, पृथ्वी को आक्रान्त करके बैठे हुए, उन्नत विशाल शिखरों वाले, शिखरचुम्बित चन्द्र कला वाले इस रैवतक पर्वत को देखकर कौन विस्मित नहीं होता। दूसरा अर्थ—दिग्वसन, ऊँचे-ऊँचे सींगों वाले वृषभ पर चढ़ने वाले, सिर पर चन्द्रकलावतंसित इन शिव जी महाराज को देखकर कौन आश्चर्यमग्न नहीं होता।

पहले पद्य में—दक्षिणा शब्द प्रकरणवश से दक्षिणा दिशा को बतलाता है, पर व्यञ्जना से चतुर नायिका रूप अर्थ को बतलाता है। दूसरे पद्य में—नगेश शब्द का प्रकरण से रैवतक रूप अर्थ निश्चित करने पर व्यञ्जना से शिव रूप अर्थ बोधित होता है। इसे हम सविस्तर संस्कृत व्याख्या में लिख चुके हैं।

लक्षणामूलां व्यञ्जनामाह विश्वनाथः—

'लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्यात् व्यञ्जना लक्षणाऽऽश्रया' ॥१०॥

उपास्यते—आश्रीयते, विधीयते इति यावत् । प्रत्याय्यते—बोध्यते । यथा—'गङ्गायां घोषः' इत्यत्र प्रवाहविशेषरूपार्थबोधनादभिधायां, तटरूपार्थबोधनाल्लक्षणायाञ्च विरतायां, यया शीतत्वपावनत्वातिशयरूपं प्रयोजनं बोध्यते, सा लक्षणामूला व्यञ्जना ।

**टीका**—यस्य प्रयोजनस्य कृते लक्षणा उपास्यते स्वीक्रियते, तत् प्रयोजनं तु यया वृत्त्या प्रत्याय्यते बोध्यते सा व्यञ्जना लक्षणाश्रया लक्षणामूला व्यञ्जना स्यादिति कारिकार्थः । अन्यत् स्पष्टम् ।

**भाषार्थ**—जिस प्रयोजन के लिये लक्षणा वृत्ति का आश्रयण किया जाता है, वह प्रयोजन जिस वृत्ति से बोधित किया जाता है, वह लक्षणामूलक व्यञ्जना वृत्ति कही जाती है । उपासना, आश्रयण, विधान एक ही बात है । प्रत्यायन का अर्थ बोधन है । जैसे—'गङ्गा में घोष रहता है' इस वाक्य में गङ्गा शब्द का अर्थ अभिधा वृत्ति के बल से प्रवाह है, तथा इतना बतलाना ही अभिधा का व्यापार है । तट रूप अर्थ का बोधन लक्षणा का व्यापार है और लक्षणा समाप्त हो जाती है । इसके बाद शीतत्व-पावनत्व का अतिशय रूप प्रयोजन जो बतलाती है, वह लक्षणामूलक व्यञ्जना वृत्ति ही है ।

आर्थीं व्यञ्जनामाह—

'वक्तृबोद्धव्यवाक्यानां काकोश्चेष्टाऽऽदिकस्य च ।
वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा' ॥११॥

[ विश्वनाथः ]

सा अर्थसम्भवा—आर्थी, व्यञ्जनेति शेषः । यं पुरुषं बोधयितुं शब्द उच्चार्य्यते, स बोद्धव्यः । काकुः—ध्वनेर्विकारः । वैशिष्ट्यात्—विशेषयोगात् ।

यथा—'गतोऽस्तमर्कः' इति वाक्येन आस्तिके द्विजातौ वक्तरि प्रतिपाद्ये वा 'सन्ध्यावन्दनस्यायमवसरः' इति; गोपाल-बालके वक्तरि प्रतिपाद्ये वा 'संह्रियन्तां गावो गृहं प्रतिनिवर्त्तामहे' इत्यादिका अर्था वक्त्रादिवैशिष्ट्यात् प्रतीयन्ते। यथा वा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्याऽऽवासे स्थितमनुचिताऽऽरम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ? ॥७॥

[ वेणीसं० ]

अत्र 'मयि न योग्यः खेदः, कुरुषु तु योग्यः' इति काक्वा प्रकाश्यते।

इति शब्दार्थनिरूपणं नाम द्वितीयशिखा।

---

**टीका**—वक्ता–प्रतिपादयिता, बोद्धव्यः–श्रोता वाक्यं प्रतिपिपादयिषितोऽर्थः, एषां सर्वेषाम्। तथा काकोः—शोकभयजनितविकृतध्वनेः, चेष्टा—करनयनादि-व्यापारविशेषः। आदिपदेन वाच्यप्रस्तावदेशादीनां ग्रहणम्। तस्य वैशिष्ट्याद् विशेषाद् या वृत्तिरन्यमर्थं बोधयेत् सा अर्थात् सम्भव उत्पत्तिर्यस्या-स्तादृशी व्यञ्जनेत्यर्थः। स्पष्टमवशिष्टम्।

**तथाभूताम**िति—वेणीसंहारे प्रथमेऽङ्के सहदेवं प्रति भीमस्योक्तिरियम्। 'दृष्ट्वा' पदस्य प्रथमे पादे द्वितीयपादैकवाक्यतापन्ने तृतीये च पादेऽन्वयः। नृप-सदसि राजसभायां न त्वेकान्ते नापि येषां केषांचित् सभायां किन्तु राज्ञां न श्रेष्ठिना-मेव। तथाभूताम् आकृष्यमाणकेशाम्बरामृतुमतीमेकवस्त्रां च पाञ्चालराजस्य द्रुपदस्य न तु साधारणव्यक्तेस्तनयां द्रौपदीं दृष्ट्वा खिन्ने मयीति दूरेणान्वयः। तथा वने नतु गृहे वल्कलधरैः न तु मृदुवस्त्रधारिभिः, व्याधैर्न तु शिक्षितमनुष्यैः सुचिरं न तु द्वित्राणि दिनानि उषितं कृतनिवासम्, विराटस्य तदाख्यराज्ञ आवासे भवनेऽनुचितो मदयोग्यो य आरम्भ उपक्रमः पाचकत्वादिकर्मणः तेन द्वारा निभृतं सुगुप्तं यथा स्यात्तथा स्थितं कृतावस्थानं मामनुजमिति शेषः, दृष्ट्वा पूर्वोक्तवि-

कारातिशयश्रयेऽतएव खिन्ने मयि गुरुर्ज्येष्ठो भ्राता खेदं कष्टं भजत्याश्रयति किन्तु कुरुषु अद्यापि एवं प्रकारेणापकारेऽपि न भजतीत्यहो विपर्ययो भाग्यस्य गुरुनीतेर्वा। कुरून् दृष्ट्वा खेदो योग्यो मयि तु न योग्य इत्याशयः। शिखरिणीवृत्तम् ॥७॥

**भाषार्थ**—वक्ता, श्रोता, वाक्य, काकु, चेष्टा तथा आदि पद से वाच्य (अर्थ), प्रस्ताव, देश आदि की विशेषता से जो वृत्ति अन्य अर्थ को बतलावे, वह अर्थसम्भवा आर्थी व्यञ्जना होती है। अर्थसम्भवा—आर्थी। व्यञ्जना पद शेष है। जिस पुरुष को समझाने के लिये वाक्य प्रयोग किया जाता है, उस व्यक्ति को बोद्धव्य कहते हैं। ध्वनि के विकार को काकु कहते हैं। वैशिष्ट्य—विशेष सम्बन्ध। जैसे—'सूर्य छिप गया' इस वाक्य का अर्थ वक्ता और श्रोता दोनों आस्तिक द्विज हों तो 'सन्ध्या करने का अवसर है'। यदि ग्वालिया ग्वालिये से कहे तो 'गौओं को इकट्ठा करो, चलो घर चलें' इत्यादि अर्थ वक्ता और श्रोता के अभिप्राय विशेष से प्रतीत होते हैं।

दूसरा उदाहरण जैसे—भीम सहदेव से गुस्से में कह रहा है कि :—

राजसभा में ऋतुस्नाता एकवस्त्रा केशों से खींची जाती हुई द्रौपदी को देखकर तथा जंगल में व्याधों के साथ वृक्षों की छाल पहन कर चिर काल तक निवास करने वाले और विराट के घर पर रसोइये का अनुचित काम करके चुपचाप दिनकटी करने वाले दुःखी हुए मुझ भीम को देखकर मुझ पर ही उलटे बड़े भाई युधिष्ठिर नाराज होते हैं, अर्थात् उनकी नाराजी पूर्वोक्त मेरे दुःखों को हरा भरा कर रही है और वे कुरुओं—दुर्योधनादि के प्रति नाराज नहीं होते। क्या उलटी बात है। यहां 'गुरु का खेद मुझ पर नितान्त अनुचित है तथा कुरुओं के प्रति योग्य है' यह नञ्पद के शोकपूर्ण उच्चारणप्रकारविशेष से ध्वनित होता है। यही नञ्पद में रहने वाली काकुप्रतिपाद्य आर्थी व्यञ्जना है।

---

## प्रश्नोत्तरमाला

(१) पदस्य स्वरूपं वद— पृष्ठ ८ देखो

(२) पदं कतिविधम्? पृ० ९ देखो

(३) शक्तिग्रहे कानि कारणानि— पृ० १० की संस्कृत टीका

(४) वाचकपदस्य लक्षणं वद— पृ० ९

**इति प्रश्नोत्तरसहिता द्वितीयशिखा समाप्ता ।**

---

# तृतीयशिखा

ध्वन्यादिभेदेन काव्यस्य भेदत्रयमाह—

**काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा ।**

ध्वनिं लक्षयति विश्वनाथः—

**'वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्' ॥१॥**

**यस्मिन् काव्ये व्यङ्ग्यार्थो वाच्यार्थादधिकचमत्कारी, तन्नाम ध्वनिः, तच्च उत्तमं काव्यम् ।**

ध्वनिभेदौ—

**'भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाऽभिधामूलौ ।**
**अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च' ॥२॥**

[ विश्वनाथः ]

लक्षणामूलाऽभिधामूलौ ( अविवक्षितवाच्यविवक्षितान्यपरवाच्यौ ) ।

**लक्षणामूलः अभिधामूलश्चेति ध्वनेर्द्वौ भेदौ । तौ च क्रमेण अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्चेति नामभ्यामपि व्यपदि-**

श्येते। तत्र अविवक्षितं—बाधितस्वरूपं, वाच्यं यत्र स अविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः, लक्षणामूलत्वादेवात्र वाच्यमविवक्षितम्।

**टीका**—काव्यं त्रिधा भवति, ध्वन्यतेऽस्मिन्निति ध्वनिः, प्रथमो भेदः। गुणीभूतं व्यङ्ग्यं यत्र तत्काव्यं गुणीभूतव्यङ्ग्यं नाम द्वितीयो भेदः। चित्रमिति तृतीयो भेदः। वाच्येति—व्यङ्ग्ये वाच्यादतिशायिन्यधिकचमत्कारिणि सति ध्वनिर्भवति। तच्चोत्तमं काव्यम्। भेदाविति—ध्वनेरपि लक्षणाऽभिधा च मूलं ययोर्भेदयोस्तौ तादृशौ द्वौ भेदावुदीरितौ। तयोर्मध्ये लक्षणामूलको भेदोऽविवक्षितवाच्यपदेनोच्यते। अभिधामूलश्च विवक्षितान्यपरवाच्यपदेन कथ्यते। निगदनीतार्थमन्यत्।

**भाषार्थ**—ध्वनि, गुणीभूत व्यंग्य और चित्र भेद से काव्य तीन प्रकार का होता है। व्यंग्य अर्थ के वाच्य से अधिक चमत्कारी होने पर ध्वनि नाम का उत्तम काव्य कहा जाता है। जिस वाक्य में (या काव्य में) व्यंग्यार्थ वाच्यार्थ से अधिक चमत्कारी हो, वह ध्वनि नामक उत्तम काव्य होता है। भेदाविति—ध्वनि के दो भेद होते हैं—एक लक्षणामूलक, दूसरा अभिधामूलक। लक्षणामूलक ध्वनि का दूसरा नाम 'अविवक्षितवाच्य ध्वनि' है तथा अभिधामूलक ध्वनि का पर्याय 'विवक्षितान्यपरवाच्य ध्वनि' कहा जाता है। लक्षणामूल और अभिधामूल इस प्रकार से ध्वनि के दो भेद होते हैं। वे दोनों क्रम से अविवक्षितवाच्य और विवक्षितान्यपरवाच्य नाम से कहे जाते हैं। अविवक्षित—बाधित स्वरूप है वाच्य जहाँ, वह अविवक्षितवाच्य नामक लक्षणामूलक ध्वनि है। लक्षणामूलक होने से ही वाच्य अविवक्षित होता है।

अविवक्षितवाच्यस्य भेदावाह—

स च द्विविधः—अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च। यदाह विश्वनाथः—

'अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति' ॥३॥

अर्थान्तरसंक्रमितवाच्यमाह—

यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपे अर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपेऽर्थान्तरे सङ्क्रमितत्वा-

दर्थान्तरसङ्क्रमितवाच्यत्वम्। यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥८॥

अत्र वचनादि उपदेशादिरूपतया परिणमति, सम्बोध्ये आत्मीयभावाऽऽद्यतिशयश्च व्यङ्ग्यः।

अत्यन्ततिरस्कृतवाच्यमाह—

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरं बोधयति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्। यथा—'उपकृतं बहु तत्र' इत्यादौ पूर्वमुक्ते। अत्राऽऽद्ये—मुख्यार्थस्यार्थान्तरे सङ्क्रमणं—प्रवेशः, न तु तिरोभावः। अत एवात्र अजहत्स्वार्था लक्षणा। द्वितीये—स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था।

**टीका**—अर्थान्तरमिति–वाच्येऽर्थेऽर्थान्तरं संक्रमिते प्रापितेऽथवाऽत्यन्तं तिरस्कृते सति—इत्येवं प्रकारद्वयेनाविवक्षितवाच्यो ध्वनिर्द्वैविध्यं प्रकारद्वैतमृच्छति गच्छति लभते इति यावत्। स्पष्टमन्यत्।

त्वामिति—कस्यचिद्धितैषिणो गुरोः कश्चित्सभां प्रति गच्छन्तं विपश्चितं शिष्यं प्रत्युक्तिरियम्। अस्मीत्यहमर्थेऽव्ययम्। त्वां प्रति अहं वच्मि कथयामि यत् अत्र सभायां विदुषां विपश्चितां समवायः समुदायस्तिष्ठति वर्तते। तस्मात् अत्र सदसि आत्मीयां स्वीयां मतिं बुद्धिमास्थायावलम्ब्य स्थितिं विधेहि कुरुष्व। यदि त्वयि पाण्डित्यमस्ति तर्हि विद्वत्सभां प्रविशान्यथा दिनान्तरवद् वावदूकता न स्वीकर्तव्याऽन्यथा तवापमानो भविष्यतीति भावः ॥८॥

अत्र—'विदुषां समवायः' इति कथनेनैव प्रतिपादने लब्धे वच्मीति पदमुपदिशामीत्यर्थे परिणमति। तेन च हितकाम्या ध्वन्यते। उपदेशादीत्यादिपदेन त्वामिति, अस्मीति पदाभ्यां त्वं नानुभवी, नापि विशेषज्ञ इति, हितचिन्तकत्वं च ध्वन्यते।

**भाषार्थ**—लक्षणामूलक अविवक्षितवाच्य ध्वनि दो प्रकार की होती है—अर्थान्तरसंक्रमितवाच्य और अत्यन्ततिरस्कृतवाच्य। जैसा विश्वनाथ लिखते हैं—

अविवक्षितवाच्य नामक ध्वनि वाच्य के अर्थान्तर में संक्रान्त होने से तथा अत्यन्ततिरस्कृत होने से इन्हीं नामों से दो प्रकार की कही जाती है।

जहाँ पर स्वयमनुपयोगी मुख्य अर्थ अपने किसी विशेष अर्थान्तर में परिणत हो जाता है, वहाँ पर मुख्यार्थ के मुख्यार्थविशेष अर्थान्तर में संक्रमित होने से अर्थान्तरसंक्रमितवाच्य नामक लक्षणामूलक ध्वनि कही जाती है। जैसे—

कोई हितैषी किसी अपने मित्र से कहता है कि मैं तुम से यह कहता हूँ कि देखो आज सभा में विद्वानों का समुदाय बैठा है। अतः अपनी अक़्ल पर भरोसा करके समझ-बूझकर सभा में बोलना, कहीं कलई खुल न जाय। 'यहाँ विद्वानों का समुदाय है' ऐसा कहने से ही अभिधेय का कथन हो जाता है फिर 'वच्मि' यह कहना तुझे 'उपदेश देता हूँ' इस अर्थ में संक्रमित हो जाता है। यहाँ 'वच्मि' यह उपदेश आदि रूप में परिणत हो जाता है। आदि पद से 'त्वाम्' पद के बिना भी सामने खड़े से कहा जा रहा है, यह बात समझ में आ जाती है। फिर 'त्वां' कहना, तू अभी नासमझ है; 'अस्मि'—मैं यह कहना, मैं तेरा हित चाहता हूँ; इन अर्थों को ध्वनित करता है। यहां श्रोता में आत्मीयताऽतिशय बोधित करना व्यंग्य है।

जहाँ पर मुख्यार्थ स्वार्थ को सर्वथा छोड़कर अर्थान्तर को बतलावे, वहाँ मुख्यार्थ के अत्यन्त तिरस्कृत हो जाने से 'अत्यन्त तिरस्कृत वाच्य' नामक ध्वनि होती है। जैसे—'उपकृतं बहु तत्र' इत्यादि पर कहे गये पद्य में स्वार्थ एकदम तिरस्कृत हो जाता है। यहां पहले 'त्वामस्मि' इत्यादि पद्य में मुख्यार्थ का अर्थान्तर में प्रवेश—संक्रमण होता है, वह सर्वथा छूटता नहीं। अतः यहां पर 'अजहत्स्वार्था लक्षणा' मानी जाती है। एवं दूसरे उदाहरण में स्वार्थ सर्वथा छूट जाता है। अतः 'जहत्स्वार्था लक्षणा' मानी जाती है।

विवक्षितान्यपरवाच्यमाह—

'विवक्षितश्चान्यपरं वाच्यं यत्रापरस्तु सः' ॥४॥

[मम्मटः]

**यत्र वाच्यं विवक्षितं—प्रकाशितस्वरूपं सत्, अन्यपरं—व्यङ्ग्यनिष्ठं, सोऽपरः—विवक्षितान्यपरवाच्यो ध्वनिः। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा—प्रदीपो घटस्य।**

तद्विभागः—

स च द्विविधः—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च ।
यदाह स एव—

'कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः' ॥५॥

असंलक्ष्यक्रमव्यङ्ग्यः—

न संलक्ष्यः—सम्यगनुभूयमानः, क्रमः—प्रतीतिक्रमो यस्य तादृशं व्यङ्ग्यं यस्मिन् सः असंलक्ष्यक्रमव्यङ्ग्यः। स च रसभावादिः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्त्येव, किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते ।

**टीका**—यत्र वाच्यं वाच्योऽर्थः विवक्षितं सदप्यन्यपरं व्यङ्ग्यार्थप्रकाशकं सोऽपरो विवक्षितान्यपरवाच्यो नाम ध्वनिः । स्पष्टमन्यत् । भाषाव्याख्याने च स्पष्टीभविष्यति ।

**भावार्थ**—जहाँ पर वाच्यार्थ विवक्षित होते हुए भी अन्य—व्यङ्ग्यपरक होता है, उस ध्वनि को विवक्षितान्यपरवाच्य ध्वनि कहते हैं। जहाँ पर वाच्य विवक्षित—प्रकाशित स्वरूप वाला होता हुआ अन्यपर–व्यङ्ग्यार्थनिष्ठ हो, वह विवक्षितान्यपरवाच्य नाम की ध्वनि होती है । यहाँ पर वाच्यार्थ स्वरूप को प्रकाशित करता हुआ ही व्यङ्ग्यार्थ का प्रकाशक होता है, जिस प्रकार दीपक स्वरूप को प्रकाशित करता हुआ ही घड़े का प्रकाशक होता है ।

वह दो प्रकार का होता है—असंलक्ष्यक्रम व्यङ्ग्य, तथा संलक्ष्यक्रम व्यङ्ग्य। जैसा कि लिखा है—कोई अलक्ष्यक्रम व्यंग्य होता है तो कोई लक्ष्यक्रम व्यंग्य। नहीं संलक्ष्य—अच्छी तरह अनुभूयमान है क्रम—प्रतीति का क्रम जिसके ऐसा व्यंग्य है जिस ध्वनि में वह असंलक्ष्यक्रम व्यंग्य नामक ध्वनि कही जाती है। ऐसे व्यंग्य रस भावादि रूप होते हैं । आदि पद से रसाभास और भावाभासादि का ग्रहण करना चाहिए । रसादि व्यंग्य स्थल में रसप्रतीति विभावादिप्रतीति के बिना नहीं हो सकती क्योंकि विभावादिप्रतीति रसप्रतीति में कारण है । अतएव विभावादिप्रतीति और रसप्रतीति में क्रम अवश्य होता है किन्तु जैसे सौ कमल के कोमल पत्तों को ऊपर नीचे रखकर कोई सूई से बींधे तो वहां सूई सब पत्तों को इतनी

जहाँ पर स्वयमनुपयोगी मुख्य अर्थ अपने किसी विशेष अर्थान्तर में परिणत हो जाता है, वहाँ पर मुख्यार्थ के मुख्यार्थविशेष अर्थान्तर में संक्रमित होने से अर्थान्तरसंक्रमितवाच्य नामक लक्षणामूलक ध्वनि कही जाती है। जैसे—

कोई हितैषी किसी अपने मित्र से कहता है कि मैं तुम से यह कहता हूँ कि देखो आज सभा में विद्वानों का समुदाय बैठा है। अतः अपनी अक़्ल पर भरोसा करके समझ-बूझकर सभा में बोलना, कहीं कलई खुल न जाय। 'यहाँ विद्वानों का समुदाय है' ऐसा कहने से ही अभिधेय का कथन हो जाता है फिर 'वच्मि' यह कहना तुझे 'उपदेश देता हूँ' इस अर्थ में संक्रमित हो जाता है। यहाँ 'वच्मि' यह उपदेश आदि रूप में परिणत हो जाता है। आदि पद से 'त्वाम्' पद के बिना भी सामने खड़े से कहा जा रहा है, यह बात समझ में आ जाती है। फिर 'त्वां' कहना, तू अभी नासमझ है; 'अस्मि'—मैं यह कहना, मैं तेरा हित चाहता हूँ; इन अर्थों को ध्वनित करता है। यहां श्रोता में आत्मीयताऽतिशय बोधित करना व्यंग्य है।

जहाँ पर मुख्यार्थ स्वार्थ को सर्वथा छोड़कर अर्थान्तर को बतलावे, वहाँ मुख्यार्थ के अत्यन्त तिरस्कृत हो जाने से 'अत्यन्त तिरस्कृत वाच्य' नामक ध्वनि होती है। जैसे—'उपकृतं बहु तत्र' इत्यादि पर कहे गये पद्य में स्वार्थ एकदम तिरस्कृत हो जाता है। यहां पहले 'त्वामस्मि' इत्यादि पद्य में मुख्यार्थ का अर्थान्तर में प्रवेश—संक्रमण होता है, वह सर्वथा छूटता नहीं। अतः यहां पर 'अजहत्स्वार्था लक्षणा' मानी जाती है। एवं दूसरे उदाहरण में स्वार्थ सर्वथा छूट जाता है। अतः 'जहत्स्वार्था लक्षणा' मानी जाती है।

विवक्षितान्यपरवाच्यमाह—

**'विवक्षितश्चान्यपरं वाच्यं यत्रापरस्तु सः' ॥४॥**

[मम्मटः]

**यत्र वाच्यं विवक्षितं—प्रकाशितस्वरूपं सत्, अन्यपरं—व्यङ्ग्यनिष्ठं, सोऽपरः—विवक्षितान्यपरवाच्यो ध्वनिः। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा—प्रदीपो घटस्य।**

तद्विभागः—

स च द्विविधः—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्च। यदाह स एव—

'कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः' ॥५॥

असंलक्ष्यक्रमव्यङ्ग्यः—

न संलक्ष्यः—सम्यगनुभूयमानः, क्रमः—प्रतीतिक्रमो यस्य तादृशं व्यङ्ग्यं यस्मिन् सः असंलक्ष्यक्रमव्यङ्ग्यः। स च रसभावादिः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्त्येव, किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते।

टीका—यत्र वाच्यं वाच्योऽर्थः विवक्षितं सदप्यन्यपरं व्यङ्ग्यार्थप्रकाशकं सोऽपरो विवक्षितान्यपरवाच्यो नाम ध्वनिः। स्पष्टमन्यत्। भाषाव्याख्याने च स्पष्टीभविष्यति।

भाषार्थ—जहाँ पर वाच्यार्थ विवक्षित होते हुए भी अन्य—व्यङ्ग्यपरक होता है, उस ध्वनि को विवक्षितान्यपरवाच्य ध्वनि कहते हैं। जहाँ पर वाच्य विवक्षित—प्रकाशित स्वरूप वाला होता हुआ अन्यपर–व्यङ्ग्यार्थनिष्ठ हो, वह विवक्षितान्यपरवाच्य नाम की ध्वनि होती है। यहाँ पर वाच्यार्थ स्वरूप को प्रकाशित करता हुआ ही व्यङ्ग्यार्थ का प्रकाशक होता है, जिस प्रकार दीपक स्वरूप को प्रकाशित करता हुआ ही घड़े का प्रकाशक होता है।

वह दो प्रकार का होता है—असंलक्ष्यक्रम व्यङ्ग्य, तथा संलक्ष्यक्रम व्यङ्ग्य। जैसा कि लिखा है—कोई अलक्ष्यक्रम व्यंग्य होता है तो कोई लक्ष्यक्रम व्यंग्य। नहीं संलक्ष्य—अच्छी तरह अनुभूयमान है क्रम—प्रतीति का क्रम जिसके ऐसा व्यंग्य है जिस ध्वनि में वह असंलक्ष्यक्रम व्यंग्य नामक ध्वनि कही जाती है। ऐसे व्यंग्य रस भावादि रूप होते हैं। आदि पद से रसाभास और भावाभासादि का ग्रहण करना चाहिए। रसादि व्यंग्य स्थल में रसप्रतीति विभावादिप्रतीति के बिना नहीं हो सकती क्योंकि विभावादिप्रतीति रसप्रतीति में कारण है। अतएव विभावादिप्रतीति और रसप्रतीति में क्रम अवश्य होता है किन्तु जैसे सौ कमल के कोमल पत्तों को ऊपर नीचे रखकर कोई सूई से बींधे तो वहां सूई सब पत्तों को इतनी

शीघ्रता से बींधती है कि वेधक्रम प्रतीत नहीं होता, इसी प्रकार यहां भी समझो ( संलक्ष्यक्रम व्यंग्य का उदाहरण रस के सोदाहरण निरूपण के अनन्तर मिलेगा )।

अथ रसनिरूपणम्—

अथ कोऽयं नाम रसः? के च विभावादयः? इत्याहुर्मम्मट-भट्टपादाः—

'कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥'

रत्यादेरित्यादिपदेन हासोत्साहादयो गृह्यन्ते। लौकिके उत्साहादीनां वक्ष्यमाणानां स्थायिभावानां यानि कारणानि—उत्पादकरूपाणि नायकप्रतिनायकादीनि, उद्दीपनरूपाणि—नायकप्रतिनायकचेष्टाऽदीनि, यानि कार्याणि—विपक्षाभिमुखगमनादीनि, यानि च सहकारीणि—सहायभूतानि धृतिगर्वादीनि, तानि नाट्ये, काव्ये च चेन्निबध्येरन्, क्रमेण विभावाः, अनुभावाः, व्यभिचारिणश्च कथ्यन्ते। तैर्विभावादिभिर्व्यक्तः—स्फुटीकृतः, विलक्षणप्रतीतिविषयीकृत इति यावत्, स्थायी भावः रसः कथितः।

**टीका**—लोके स्थायिनः स्थायीभावभूतस्य रत्यादेः—आदिपदेन हासादेर्ग्रहणम्। यानि कारणानि, कार्याणि, अथ—तथा सहकारीणि भवन्ति तान्येव कारणादीनि चेद्यदि नाट्ये काव्ये च स्युस्तर्हि क्रमेण विभावानुभावव्यभिचारिभावसंज्ञां लभन्ते। तैश्च विभावाद्यैर्व्यक्तः प्रकटीकृतः स्थायी भावो रससंज्ञां लभते। लौकिके—लोके इत्यर्थः। यथा—शृङ्गारे रतिः स्थायी भावः। ललनाद्युत्पत्तिकारणम्। स एवाऽऽलम्बनविभावः। तच्चेष्टाश्चन्द्रिकादयश्चोद्दीपनविभावाः। अनुभावाश्च कटाक्षाश्रुपातादिरूपाणि कार्याणि। अनु पश्चाद् भवन्ति जायन्ते इत्यनुभावाः। अनुभूयन्ते आत्मना प्रत्यक्षीक्रियन्ते इत्यनुभावाः। स्मृतिमोहादयो व्यभिचारिणः। सहकारि-

कारणत्वात् । विशेषेणाभिमुख्येन च चरणात् प्रचरणाद् व्यभिचारिणो भावाः कथ्यन्ते । एवं विशेषेण भावनादुत्पादनाद्धि भावा उच्यन्ते । आलम्बनोद्दीपनाख्यौ विभावस्य द्वौ भेदौ तौ च दर्शितचरौ । अन्यत् सर्वमवदातम् ।

भाषार्थ—अब यह विचार है कि रस किसे कहते हैं ? विभावादि का क्या लक्षण है ? इस शङ्का के उत्तर में मम्मटभट्ट लिखते हैं कि :— लोक में रति आदि स्थायी भाव की उत्पत्ति में जो कारण, कार्य, सहकारी कारण होते हैं, यदि वही कारण कार्यादि नाट्य और काव्य में आ जावें तो कारण विभाव बन जाते हैं, कार्य अनुभाव कहाते हैं, सहकारी कारण व्यभिचारी भाव कहाते हैं । इस प्रकार इन विभावादि से चर्व्यमाण— आस्वाद्यमान हुआ स्थायी भाव रस पदवी को प्राप्त होता है । रत्यादि इस आदि पद से हास, उत्साह आदि लिये जाते हैं । लोक में वक्ष्यमाण उत्साह आदि स्थायिभावों के जो उत्पादक कारण नायक प्रतिनायक आदि होते हैं । उद्दीपक कारण—नायक प्रतिनायक ( योद्धा प्रतियोद्धा ) की चेष्टाएं वीर रस में होते हैं । कार्य—शत्रु के सामने अकड़कर चलना आदि । सहकारी कारण सहायभूत धैर्य गर्वादि । अगर इन सब को नाट्य और काव्य में निबद्ध किया जाय तो क्रम से विभाव, अनुभाव, व्यभिचारिभाव कहे जाते हैं । इन विभावादि से स्फुटीकृत अर्थात् विलक्षण चमत्कारपूर्ण प्रतीति का विषय बनाया हुआ स्थायी भाव ही रस कहलाता है ।

रसभेदाः—

तद्विशेषानाह—

'आदिमो हास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ काव्ये रसाः स्मृताः ॥'

[ मम्मटः ]

एषां क्रमेणोदाहरणानि ।

आदिमस्य—

विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन ॥६॥

[ कुमा० ]

हास्यस्य—

भिक्षो ! मांसनिषेवणं प्रकुरुषे ? किं तेन मद्यं विना ?
मद्यञ्चापि तव प्रियम् ? प्रियमहो ! वाराङ्गनाभिः सह ।
तासामर्थरुचिः कुतस्तव धनम् ? द्यूतेन चौर्येण वा,
चौर्यद्यूतपरिग्रहोऽपि भवतः ? नष्टस्य काऽन्या गतिः ॥१०॥

करुणस्य—

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत् ? ॥
यस्य भृत्याश्च दासाश्च स्वादून्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते रामो वने मूलफलान्ययम् ? ॥११॥

[ रामा० ]

**टीका**—आदिमः—शृङ्गार इत्यर्थः । शिष्टं स्पष्टम् ।

**विवृण्वती**ति—शैलसुता पार्वती स्फुरन् विकसन् यो बालकदम्बस्तत्कल्पैस्तत्सदृशैः । अत्रेषदूनार्थे कल्पप्प्रत्ययः । सञ्जातरोमाञ्चैरित्यर्थः । अङ्गैरवयवैः भावं प्रेमाणं विवृण्वती प्रकाशयन्ती सती पर्यस्तेऽधोदेशे क्षिप्ते विलोचने नयने यस्मिन् तादृशेन चारुतरेणातिमनोज्ञेन मुखेन साचीकृता वक्रीकृता लज्जया नतवक्राननेत्यर्थः । तस्थौ स्थितवती । अत्र स्थायिभावभूता रतिः शर्वरूपालम्बनविभावेन पार्वतीरोमाञ्चोदयेनानुभावेन पर्यस्तविलोचनत्वप्रकाशितलज्जारूपव्यभिचारिभावेन परिपुष्टत्वमापन्ना सहृदयानां कृते शृङ्गाररसत्वमापद्यते । उपजातिश्च वृत्तम् ॥६॥

हासोदाहरणमाह—**भिक्षो** इति । कश्चित् परीहासप्रियो भिक्षुं पृच्छति, सोऽपि स्वोत्तरं हासेनैव वदति चेत्युक्तिप्रत्युक्ती अत्र वर्तेते । तथाहि—हे भिक्षो ! संन्यासिन् ! श्रुतमस्माभिर्यत्त्वं मांसनिषेवणं मांसभक्षणं प्रकुरुषे विदधासि, इति प्रश्ने स प्रतिब्रूते—अरे ! भद्रमुख ! मांसनिषेवणं मद्यं विना न स्वदते इति । पुनर्भक्तो ब्रूते—तर्हि तव मद्यमपि प्रियम् ? स प्रतिवचनं प्राह—अहो ! मद्यं वाराङ्गनाभिर्वेश्याभिः सह प्रियम् । नागरो ब्रूते—तर्हि तासामर्थरुचिर्भवति । तस्याः पूर्तिं भवान् कथं करोति ? स आह—द्यूतेन चौर्येण वा पूर्तिः क्रियते । तर्हि किं चौर्यद्यूतयोः परिग्रहमपि भवान् करोत्येव । स ब्रूते—बाढम् ।

नष्टस्य शीलाचाररहितस्य मनुष्यस्य कृते जीविकोपायः चौर्यद्यूते एव नान्यौ उपायौ इत्यर्थः। तथाच अन्या तत्कृते गतिर्नास्ति, इत्यर्थः। नागरिकः परिहास-प्रियो भिक्षुं प्रति मांसभक्षणशङ्कया प्रश्नमकरोत्, सोऽपि भिक्षुस्तत्परिहासभावं ज्ञात्वा तथैवोत्तरं दत्तवानिति परिहासोदाहरणमिदम्। अत्र भिक्षुरालम्बनविभावः। मांसनिषेवणादिकमनुभावः। चपलता व्यभिचारिभावः। एतैः पुष्टो हासस्थायिभावश्च हास्यरसत्वमापद्यते। शार्दूलविक्रीडितं वृत्तम् ॥१०॥

करुणोदाहरणमाह—**अदृष्टेति**—कौसल्या रामवनवासनिश्चयं ज्ञात्वा विल-पति—न दृष्टमनुभूतं दुःखं येन सोऽदृष्टदुःखो यद्वा परेषामपि दुःखस्य येन दर्शनं न कृतम्। धर्मयुक्त आत्मा यस्य स तादृशः। सर्वेषां भूतानां प्राणिनां कृते प्रियंवदः प्रिय-वक्ता। दशरथात् एतन्नाम्नो राज्ञो मयि जातः सन् रामः उञ्छेन शिलाकणोच्चयेन कथं वर्तयेत् वृत्तिं कुर्यात् जीवनं निर्वाहयेत्। किंच यस्य भृत्या दासाश्च स्वादून्यन्नानि भुञ्जते भक्षयन्ति, स रामो वने मूलफलानि कन्दफलानि कथं भोक्ष्यतेऽभ्यवहरिष्यति। तस्य जीवनयात्रा वने कथं भविष्यतीति कौसल्या विचिन्त्य मुह्यतीत्यर्थः। अत्र राम आलम्बनविभावः। उञ्छवृत्तिजीवनमुद्दीपनविभावः। क्रन्दनमनुभावः। विषादाऽऽ-वेगादिकं व्यभिचारिभावः। एतैः परिपुष्टः शोकः करुणरसत्वमापद्यते। पथ्या-वक्त्रं वृत्तम् ॥११॥

**भाषार्थ**—पार्वती भी विकसित होते हुए बाल कदम्ब वृक्ष के समान रोमाञ्चों वाले अङ्गों के द्वारा अनुराग को प्रकट करती हुई नीची निगाह वाले सुन्दर मुख को तिरछा करके सहमी रह गई। यहाँ रति स्थायिभाव है। शङ्कर महादेव आलम्बन विभाव हैं। रोमाञ्च अनुभाव और नीची निगाहों से ध्वनित लज्जा व्यभिचारी भाव है। इन सब से श्रृङ्गार रस व्यक्त होता है। हास्य रसोदाहरण जैसे—

कोई शहरी भिक्षु से, जो कभी मांसभक्षक हो ही नहीं सकता, हँसी में पूछता है कि क्यों साधु जी! मांस उड़ाते हो? वह भी घुटा हुआ साधु है, हँसी में ही कहता है—मांस की क्या चलाई, शराब की बोतलें भी। शराब के बिना मांस का क्या स्वाद। तो परमहंस जी! आप शराब भी पीते हैं? वह उत्तर देता है—रण्डियों के साथ। तो रण्डियों को भेंट चढ़ाते हो? तुम्हारे पास धन कहां से आया? उत्तर—जूए और डाकेजनी से। तब तो महाराज! आप पूरे सन्त हो, जो चोरी-जारी सब करते हो! साधु जी

कहते हैं—दुराचारियों के और क्या काम हो सकते हैं, यही काम हैं; उन्हें हम करते ही हैं। अब समझ लो, हम मांस खाते हैं या नहीं ? और मनुष्यता से हीन व्यक्तियों में यही सब दुर्व्यसन होते हैं । यहां भिक्षु आलम्बन विभाव, मांसादि सेवन अनुभाव, अनेक कार्यों में प्रवृत्ति कारण चपलता व्यभिचारी भावों से पुष्ट स्थायीभाव हास—हास्यरसता को प्राप्त करता है ।

करुण रस का उदाहरण जैसे—राम को वनवास के लिये कमर कसे समझ माता कौसल्या विलाप करती हैं—कि मेरा पुत्र राम, दुःखों को ( दूसरों के भी ) देख नहीं सकता, धर्मात्मा है, प्रत्येक प्राणी से मीठा बोलता है, दशरथ जैसे प्रतापी राजा का पुत्र है। जिसके नौकर चाकर भी षड्रस व्यञ्जन खाते हैं, भला वह राम जंगल में कन्द फल मूल खाकर कैसे जीवित रहेगा ! यहां राम आलम्बन विभाव, उञ्छ वृत्ति से जीवन उद्दीपन विभाव, क्रन्दन अनुभाव, कौसल्या के विषादादि व्यभिचारि भाव से पोषित शोकरूपी स्थायीभाव करुण रस बन जाता है ।

रौद्रस्य—

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥१२॥ [ वेणी० ]

वीरस्य—

क्षुद्राः ! सन्त्रासमेते विजहित हरयः ! क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ, पात्रं त्वमसि न हि रुषां, नन्वहं मेघनादः
किञ्चित् भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥१३॥[हनुमन्ना०]

टीका—कृतमिति—रौद्ररसस्येदमुदाहरणम् । वेणीसंहारनाटके रणे त्यक्तशस्त्रस्य द्रोणस्य शिरश्छेदं कृतवतो धृष्टद्युम्नस्य सपक्षान् कौरवानुद्दिश्य क्रुद्धस्याश्वत्थाम्न उक्तिरियम्—यैः निर्गतो मर्यादाया इति निर्मर्यादस्तैर्निर्मर्यादैरुदायुधै-रुद्यतशस्त्रैर्मनुजैः सद्भिरपि पशुभिः पशुतुल्यैर्भवद्भिः इदं गुरुपातकं महापातकं गुरो-र्द्रोणस्य पातकं हननात्मकं पाप्मा वा दृष्टमवलोकितमनुमतमनुज्ञातं कृतं सम्पादितं

वा एभ्यस्त्रिप्रकारेभ्योऽपि मनुजेभ्य एकमेव दण्डं दिशामि, यन्नरकस्य तन्नामकासुरस्य स्थानविशेषस्य वा प्रसिद्धस्य रिपुर्हन्ता श्रीकृष्ण इति यावत्—तेन सार्द्धं सह तेषां सर्वेषां भीमकिरीटिभ्यां सहितानामिति सभीमकिरीटिनामसृजा शोणितेन मेदसा वसया मांसेन पललेनेति तैः कृत्वा दिशां दिग्देवतानां ताभ्य इति यावत् बलिं पूजां 'बलिः पूजोपहारयोः' इत्यमरः। करोमि निर्वर्तयामि। तान् हन्मि—इत्यर्थः। हरिणी वृत्तम्। अत्रार्जुनादय आलम्बनविभावः। उदायुधत्वादिरुद्दीपनविभावः। तर्जनाधिक्षेपवचनाद्यनुभावः। गर्वामर्षादिर्व्यभिचारिभावः। तैः पुष्टोऽयं कोपनामा स्थायिभावो रौद्ररसत्वमापद्यते इति ॥१२॥

वीरोदाहरणमाह—**क्षुद्रा** इत्यादि। क्रुद्धस्य मेघनादस्योक्तिरियम्। हे! क्षुद्राः जात्यैव नीचाः, हरयः! वानराः! एते अमी यूयं सन्त्रासं मरणाशङ्कां विजहित परित्यजत। यूयं क्षुद्रत्वादेव न प्रहर्तुमर्हाः। क्षुण्णौ चूर्णीकृतौ शक्रस्येन्द्रस्य य इभो हस्ती तस्य कुम्भौ यैस्ते अमी इमे मम सायका बाणा युष्मद्देहेषु युष्माकं शरीरेषु निष्पतन्तः पतन्तः सन्तः परमत्यन्तं लज्जां ह्रियं दधाति धारयन्ति। हे सौमित्रे! लक्ष्मण! त्वं तिष्ठ मा धाव युद्धाय वा संनह्य यतस्त्वं मम रुषां क्रोधानां पात्रं भाजनं नासि न भवसि ननु निश्चयेनाहं मेघनाद इन्द्रजित् नामकः प्रसिद्धो वीरोऽस्मि। किञ्चित् मनाक् यो भ्रूभङ्गः क्रोधेन भ्रुवोर्वक्रीकरणं तस्य लीलया विलासेनैव नियमितो बद्धो जलधिर्येन तं तादृशं रामं दाशरथिमन्वेषयामि मार्गयामीत्यर्थः। महान् महत्स्वेव करोति विक्रममित्यर्थः। पुरा रामे समाकृष्टशरासने जलधिं दग्धुमुद्यते नीरधिः सहसाऽऽगम्य रामस्य चरणौ ववन्दे इति भावः। अत्र राम आलम्बनविभावः। क्षुद्रेषूपेक्षादिकमनुभावः। रामचेष्टा समुद्रबन्धनं च उद्दीपनविभावः। इन्द्रगजकुम्भदारणस्मृतिर्व्यभिचारिभावः। एतैः पुष्ट उत्साहाख्यः स्थायीभावो वीररसतां भजति। स्रग्धरावृत्तम् ॥१३॥

**भाषार्थ**—जिन मर्यादारहित उच्छृङ्खल आप लोगों ने शस्त्र उठाकर इस बड़े भारी पाप को किया, देखा या इसमें अनुमति दी, उन नर-पशुओं—भीम, अर्जुन आदि पाण्डवों के मांस, मज्जा, खून के द्वारा श्रीकृष्ण सहित दिशाओं में बलि चढ़ाऊँगा। यहां अर्जुन आलम्बन विभाव, पितृहनन उद्दीपन विभाव, गर्व व्यभिचारिभाव है। इनसे पुष्ट क्रोध रूपी स्थायिभाव से रौद्र रस सामाजिक चर्वणा का आस्पद होता है। यह पद्य द्रोणाचार्य के वध के बाद कुपित अश्वत्थामा की उक्ति रूप है।

वीर का उदाहरण दिखाते हैं—क्षुद्रा इत्यादि। रावणपुत्र मेघनाद की यह उक्ति है। अरे! बन्दरो! तुम क्षुद्र हो। अतः तुम मुझे देखकर मत डरो। तुम्हें तो मेरा अभय दान है। क्योंकि इन्द्र के हाथी ऐरावत के मस्तक को विदीर्ण करने वाले यह मेरे बाण तुम्हारे शरीर पर गिरते हुए लजाते हैं। और हे लक्ष्मण! मेरी तुम से भी लड़ाई नहीं है क्योंकि मेरा नाम मेघनाद है। मैं तो ज़रा-सी भौंहों के टेढ़ा करने से समुद्र को बन्धन में डालने वाले राम को ढूँढ रहा हूँ। क्योंकि 'महान् महत्स्वेव करोति विक्रमम्' यह भाव है।

यहां राम आलम्बन विभाव है। सेतुबन्धन उद्दीपन विभाव है। नीच बलहीनों पर प्रहार न करना अनुभाव है। गर्व इन्द्रगजदारण-स्मृति व्यभिचारिभाव है। इनसे पुष्ट उत्साह वीर रस रूपता को प्राप्त होता है। छन्दोविज्ञान हम ने संस्कृत टीका में लिखा है, वहीं देखिए।

भयानकस्य—

नष्टं वर्षवरैर्मनुष्यगणनाऽभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्य्यन्ताऽऽश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाऽऽशङ्किनः॥१४॥

[ रत्नावली ]

टीका—भयानकोदाहरणमाह—नष्टमिति। रत्नावलीनाटिकायां यदा वसन्तको वानरवेषं परिगृह्याश्वशालाया निरगच्छत् प्राविशच्चान्तःपुरं तदा वर्षवरैः षण्ढैर्मनुष्येषु गणनाया अभावात् त्रपां लज्जां अपास्य त्यक्त्वा नष्टं पलायितम्। यो हि मनुष्यः स्यात् भिया धावन् ह्रियं कुर्यात् ते च न मनुष्याः इति धावने लज्जां मनागपि न चक्रुः। किञ्च पश्य—अयं वामनः खर्वो मनुष्यः कञ्चुकिनो वृद्धवर्षवरस्य [तदुक्तम्—'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते' इति] यः कञ्चुको वारबाणः यद्वा साधारणं कञ्चुकमेव 'कुर्ता' इति हिन्दीभाषायां ख्यातम्। तस्यान्त-रभ्यन्तरे त्रासाद् भयाद्विशति प्रविशति। किरातैर्वणिग्भिर्व्यापारिभिरापणिकै-

रिति यावत्, यद्वाऽन्तःपुरवर्तिशवरैरित्यप्यर्थः संभवति कथंचित् । पर्यन्तं गृहप्रान्तदेशं आश्रयन्तीति पर्यन्ताश्रयिणस्तैः पर्यन्ताश्रयिभिः सद्भिर्निजस्य नाम्नः किरातेतिनाम्नः सदृशं समानं कृतं विहितम् । यतः किरातशब्दस्य किरं प्रान्तदेश-मतति गच्छति व्यापारवाणिज्यादिकर्मणे इति किरातो वणिगित्यर्थः । तथाच यौगिक-संज्ञाऽन्वर्थीकृतेत्यर्थः । कुब्जाश्च पुरुषा आत्मनः स्वस्येक्षणस्य दर्शनस्याशङ्किन आशङ्कावन्तः शनकैः शनैः शनैर्निःशब्दमित्यर्थः । नीचतयाऽतिसंकोचेन यान्ति, भुवि रिङ्गन्तोऽपयान्तीत्यर्थः । अत्र वानरनिर्गमनमालम्बनविभावः । वानरचेष्टादिकमुद्दीपन-विभावः । धावनकम्पादिकमनुभावः । वर्षवरत्रासादिकं व्यभिचारिभावः । एतैः पुष्टा भीतिः सामाजिकेषु भयानकरसत्वमापद्यते । शार्दूलविक्रीडितं छन्दः ॥१४॥

**भावार्थ**—वर्षवर ( नपुंसक ) तो मनुष्यों में गिनती न होने के कारण सरे-बाज़ार बेशर्म हो भाग खड़े हुए । वामन ( बौना ) मारे डर के कञ्चुकी के अंगरखे—बड़े चोगे जैसे कुर्ते में जा घुसा । किरात—डरपोक लाला जी (बनिये) या भीलों ने (भीलों में डरना संभव नहीं, अतः किरात शब्द का बनिया या सेठ जी अर्थ ही ठीक है) अपने नाम जैसा ही काम किया (व्युत्पत्ति संस्कृत टीका में देखिये)। रहे कुबड़े, वे हमें कहीं बन्दर देख न ले इस डर से और झुककर चलने लग पड़े । यहाँ बन्दर के डर का वर्णन है । यहां बन्दर आलम्बन विभाव है । उसके व्यापार उद्दीपन हैं । डर के मारे भागना अनुभाव है । त्रासादि व्यभिचारि भाव हैं । इनसे पुष्ट भीति चर्व्यमाण हुई भयानक रस रूप बन जाती है ।

**बीभत्सस्य—**

**उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-**
**न्यंसस्फिक्पृष्ठपिण्डाऽऽद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।**
**अन्तःपर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-**
**दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥१५॥**

[ मालतीमाधवम् ]

**टीका**—मालतीमाधवे माधवः प्रेतरङ्कमालोक्य ब्रूते—एष प्रेतरङ्कः दरिद्रः प्रेतः पिशाच इति यावत् । प्रथममादौ कृत्तिमुपरिगतां त्वचमुत्कृत्योत्कृत्य कर्तयित्वे-त्यर्थः । अथानन्तरं पृथुर्य उत्सेध औन्नत्यं तेन हेतुना भूयांसि बहुलानि, उग्रपूतीनि

असह्यदुर्गन्धीनि अंसः स्कन्धदेशः, स्फिचौ नितम्बौ, पृष्ठपिण्डी जंघोर्ध्वभागः यद्वा पिण्डेति पाठे पिण्डमिति प्रत्येकमन्वेति । तदादयो येऽवयवास्तत्र सुलभानि मांसानि पलानि जग्ध्वा भक्षयित्वाऽन्तःपर्यस्ते प्रविष्टे नेत्रे यस्य तादृशः, प्रकटितानि दशनानि दन्ता येन स तादृशः, प्रेतरङ्कः अङ्कस्थादुत्सङ्गवर्तिनः करङ्कात् कङ्कालात् मृतकस्य शरीरादिति यावत्, अस्थिषु संस्थाऽवस्थितिर्यस्य तादृशमपि स्थपुटगतं निम्नोन्नतस्थानगतमपि कव्यं मांसमव्यग्रं निःशङ्कमत्ति भक्षयतीत्यर्थः । अत्र प्रेतरङ्कः आलम्बनम् । मांसकर्तनं तद्भक्षणं च उद्दीपनम् । उद्वेगः ग्लानिश्च संचारिभावः । माधवस्य जुगुप्सा स्थायीभावः । तद्रष्टुर्नासाकुञ्चनादिविशेषोऽनुभावः । एतैः पुष्टो बीभत्सो रसः । इति । स्रग्धरावृत्तम् ॥१५॥

भावार्थ—यह दरिद्र प्रेत अपने गोद में रक्खे हुए शव की पहले चमड़ी उधेड़कर मांसबहुल कन्धे, चूतड़, जांघ (पृष्ठपिण्डी) आदि मोटे २ स्थानों को खा रहा है । फिर गढ़ी हुई आँखों वाला दाँत दिखा दिखाकर जोड़ों में चिपटे हुए मांस को छुड़ा छुड़ा कर खा रहा है ( अभी इसकी भूख ही नहीं मिटी ) । यहां प्रेतरङ्क तथा शव आलम्बन है । दुर्गन्धातिशय, मांस का काटना व खाना उद्दीपन विभाव है । माधव की जुगुप्सा स्थायिभाव है । तथा नाक सिकोड़ना आदि व्यापार अनुभाव है । ग्लानि व्यभिचारी भाव है । अतः यह सब समुदाय मिलकर बीभत्स रस को व्यक्त करता है ।

यहां 'अन्तःपर्यस्तनेत्रः' की जगह 'आर्तः पर्यस्तनेत्रः' ऐसा पाठ भी है । तब आर्त=दुःखी, पर्यस्तनेत्र=चारों तरफ जिसने आँखें घुमाई हैं—यह अर्थ करना चाहिए । खाने वाले पिशाच को यह शङ्का है कि बलशाली पिशाच आकर मुझ से मेरा यह शव कहीं छीन न ले, अतः चारों तरफ देखता जाता है ।

अद्भुतस्य—

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥१६॥ [अभि० शा०]

एषां क्रमेण स्थायिभावानाह मम्मटः—

'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्त्तिताः ॥'

व्यभिचारिभावान् कथयति स एव—

'निर्वेदग्लानिशङ्काऽऽख्यास्तथाऽसूयामदश्रमाः ।
आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीड़ा चपलता हर्ष आवेगो जड़ता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥'

**टीका—मानुषीभ्य** इति । अयं श्लोको व्याख्यातचरः, पञ्चमे पृष्ठे । अत्र शकुन्तलाऽऽलम्बनविभावः । तस्याः सौन्दर्यातिशय उद्दीपनम् । शकुन्तलादर्शनान्नेत्र-विस्तारात्माऽनुभावः । औत्सुक्यादयो व्यभिचारिभावाः । तैः पुष्टो विस्मयाख्यः स्थायि-भावः अद्भुतरसत्वमापद्यते ॥१६॥

रतिरिति—प्रेमद्रुतचित्तव्यापारविशेषो रतिः । वागाद्यङ्गविकारालोकन-शब्दार्थविशेषचिन्तनोद्भवो हासः । पुत्रपत्न्यादिवियोगजन्यः शोकः । शत्रुविषयक-तीक्ष्णताबोधकचेष्टाः शब्दव्यापारविशेषाभिव्यञ्जितः क्रोधः । चेतसो विस्ताररूप उत्साहः । रौद्ररूपादिदर्शनजनितं चेतोवैक्लव्यं भयम् । कदर्यदोषेक्षणजनितगर्हा जुगुप्सा । अलौकिकवस्तुदर्शनजो मानसो विस्तारो विस्मयः । एते पूर्वोक्तश्रृङ्गारादिरसतां क्रमशः स्थायिभावाः भवन्ति । व्यभिचारिभावानाह—निर्वेदेति । एषां स्वरूपञ्चेत्थम्—

विपत्पातेन तत्त्वज्ञानादिना वा स्वावमानना निर्वेदः, परगुणादीनामसहिष्णुता असूया, मद्योपयोगेन चित्तविकारो मदः, अभीष्टलाभादिना सम्पूर्णकामता धृतिः, ग्रहाऽऽद्यावेशादिना मनःक्षेपः अपस्मारः, निद्रागतस्य विषयानुभवः सुप्तम्, निन्दादि-कर्त्तुर्वैरनिर्य्यातननिश्चयः अमर्षः, लज्जादिना हेतुना हर्षाऽऽद्याकारगोपनम् अवहित्थम्, शास्त्रोपदेशादिनाऽर्थनिर्द्धारणं मतिः । अन्यत् स्पष्टम् ।

**भावार्थ**—अद्भुत का उदाहरण दिखाते हैं—मानुषीभ्य इत्यादि पद्य से । इसका अर्थ हम पहले पाँचवें पृष्ठ पर लिख चुके हैं । यहां पर शकुन्तला आलम्बन विभाव है । उसकी सुन्दरता, एकान्त व बाग उद्दीपन हैं ।

उसको देखकर हुआ नयनों का फाड़ फाड़ कर देखना अनुभाव है। औत्सुक्यादि व्यभिचारि भाव हैं। इनसे पुष्ट विस्मयाख्य स्थायी भाव अद्भुतरसरूपता को प्राप्त करता है। पूर्वोक्त शृङ्गारादि रसों के स्थायिभावों को गिनते हैं—रति, हास, शोक, क्रोध, उत्साह, भय, जुगुप्सा ( घृणा ), विस्मय ( आश्चर्य ) ये क्रम से स्थायिभाव हैं।

व्यभिचारि भावों को गिनाते हैं—निर्वेद ( दुःख ), ग्लानि=मन में विकलता, शङ्का, असूया=परगुणासहिष्णुता से होने वाली निन्दा, मद=मस्ती, श्रम=थकावट, आलस्य, दीनता, चिन्ता, मूर्च्छा, स्मृति, धैर्य, लज्जा, चञ्चलता, हर्ष, जल्दी, मूर्खता, गर्व, विषाद, उत्सुकता, निद्रा, अपगतस्मृति (अपस्मार), सोते २ विषयानुभव करना, जागृति, क्रोध, अवहित्था=अपने आकार को छिपाना लज्जादि से, उग्रता, शास्त्रोपदेशजन्य मति, विरहरोग, चित्तविभ्रम, मृत्यु, डर, ऊहापोह यह तेतीस व्यभिचारिभाव हैं।

नवमः शान्तरसः—

'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ॥'

[ मम्मटः ]

यथा—अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित् पुण्येऽरण्ये शिव ! शिव ! शिवेति प्रलपतः ॥१७॥

[ वैरा० शत० ]

वत्सलरसः—

'केचिच्चमत्कारितया वत्सलञ्च रसं विदुः ॥'

[ विश्वनाथः ]

यथा—यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम्।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥१८॥ [ रघु० ]

टीका—शान्तरसं निरूपयति—निर्वेदो वैराग्यं स्थायिभावो यस्य स तादृशः शान्तः शान्तनामको नवमो रसः अस्ति । यथा—अहाविति । पद्यमिदं भर्तृहरेः । अहौ सर्पे वा अथवा हारे मुक्ताभरणे कण्ठलम्बिनि, कुसुमशयने पुष्पशय्यायां वाऽथवा दृषदि पाषाणखण्डे, मणौ पद्मरागादिमणौ लोष्ठे मृत्पिण्डे वा, बलवति शक्तिमति रिपौ शत्रौ सुहृदि मित्रे वा, तृणे प्रसिद्धे स्त्रैणे स्त्रीसमुदाये वा, समा दृक् दृष्टिर्यस्य तादृशस्य मम दिवसा क्वचित्पुण्ये पवित्रेऽरण्ये वने शिव शिवेति प्रलपतरुच्चैराक्रोशतो यान्तु व्यतियन्तु । शिखरिणीवृत्तम् । अत्राहिहारादेः निःसारताया दर्शनमालम्बनम् । पुण्याश्रमवासादिरुद्दीपनम् । अहिहारादेः समदर्शनमनुभावः । रोमाञ्चादिर्व्यभिचारिभावः । निर्वेदः स्थायिभावः । एतैः परिपुष्टः स्थायिभावः शान्तरसत्वमापद्यते ॥१७॥

वत्सलरसमाह—केचिदिति । केचिद् विद्वांसश्चमत्कारितया चमत्कारजनकत्वेन वत्सलमपि रसं विदुर्जानन्ति मन्यन्ते इत्यर्थः । यथा—रघुवंशे रघोर्बाल्यवर्णनमिदम् । यत् स रघुर्धात्र्या उपमात्रोदितं प्रोक्तं वच आह ब्रूते स्म, यच्च तदीयामङ्गुलिमवलम्ब्य गृहीत्वा ययौ जगाम, यच्च प्रणिपातस्य प्रणामस्य शिक्षयोपदेशेन नम्रो विनीतो बभूव, तेन हेतुना स पितुर्दिलीपस्य मुदं हर्षं ततानाकार्षीत् । वंशस्थं वृत्तम् । अत्र रघुरालम्बनम् । तस्य चेष्टाद्या उद्दीपनम् । चुम्बनादय अनुभावाः । अनिष्टशङ्कागर्वहर्षादयो व्यभिचारिणः । एतैः पुष्टः स्नेहाख्यः स्थायिभावो रसतामापद्यते ॥१८॥

भावार्थ—निर्वेद—वैराग्य, शम, जिसका स्थायिभाव होता है, वह शान्त रस कहलाता है । जैसे—साँपों पर या हारों पर, फूलों की सेज पर या पत्थरों की चट्टान पर, मणियों पर या मिट्टी के ढेलों पर, बलवान् शत्रुओं में या मित्रों में, तिनकों पर या स्त्रियों के झुण्ड में—कहीं पर भी पुण्यकारी वन में शिव ! शिव ! शिव ! की रट लगाते हुए समभावना वाले मेरे दिन कटें ।

यहाँ पर सर्पादि को निःसार समझना आलम्बन विभाव है । पुण्याश्रमादि सन्निधि उद्दीपन विभाव है । तृणादि का सम दर्शन अनुभाव है । रोमाञ्चादि व्यभिचारि भाव हैं । इनसे पुष्ट हुआ निर्वेद रूपी स्थायी भाव शान्त रस बन जाता है । वत्सलरस का लक्षण करते हैं कि कुछ लोग चमत्कारक होने से वत्सल को भी रस मानते हैं । जैसे—रघु धाय के बोलने पर जैसा वह बोलती थी वैसे ही बोलता था, उसकी उँगली पकड़कर चलता था,

नमस्कार करने को कहते ही नम्र हो जाता था, इस प्रकार पिता ( दिलीप ) के हर्ष को वह बालक रघु परिवर्धित करता था। यहाँ रघु आलम्बन है। उसकी चेष्टाएँ उद्दीपन हैं। चुम्बनादि अनुभाव हैं। गर्वादि व्यभिचारि भाव हैं। इनसे पुष्ट हुआ स्नेह ( वात्सल्य ) नामक स्थायी भाव रस रूप बन जाता है।

संलक्ष्यक्रमव्यङ्ग्यमाह—

'यत्र व्यङ्ग्यप्रतीतिस्तु क्रमः सम्यग्विभाव्यते।
स संलक्ष्यक्रमव्यङ्ग्यस्तद्भेदा बहवः स्मृताः ॥'

यथा पूर्वोदाहृते 'कुबेरगुप्ताम्' ( पृ० १८ ) इत्यादिश्लोके दक्षिणाशब्देन दाक्षिण्यशीलनायिकारूपं वस्तु व्यज्यते। अयञ्च शब्दशक्त्युद्भवो वस्तुध्वनिः।

गुणीभूतव्यङ्ग्यमाह—

'अनुत्तमे गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु वाच्यतः।'

व्यङ्ग्ये—व्यङ्ग्यार्थे, वाच्यतः—वाच्यार्थात्, अनुत्तमे—अनधिकचमत्कारिणि सति, गुणीभूतव्यङ्ग्यम्; तच्च मध्यमं काव्यं कथ्यते। यथा—

अत्राऽऽसीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राऽऽहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥१६॥

[ बालरामायणं नाटकम्। १० अङ्क २० श्लोकः ]

अत्र अनुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थपादे नायको राम एवार्थशक्त्या प्रतीयते, स च केनापीत्युपादानेन वाच्यायमानतयाऽगूढः कृत इति व्यङ्ग्यस्य चमत्कारित्वमपनीतम्।

**टीका**—यत्रेति—यत्र व्यङ्ग्यप्रतीतिव्यङ्ग्यार्थज्ञानस्य क्रमः सम्यग् विभाव्यते ज्ञायते स संलक्ष्यो विज्ञेयः क्रमो यत्र तादृशो व्यङ्ग्यः। तस्य भेदा बहवः स्मृता उक्ता इत्यर्थः। यथा पूर्वोदाहृते पूर्वमुक्ते 'कुबेरगुप्ताम्' (पृ० १८) इति पूर्वोक्ते श्लोके

दक्षिणाशब्दो दाक्षिण्येन चातुर्येण युक्तं नायिकारूपं वस्तु व्यनक्ति । अयमेव शब्द-शक्तिमूलो वस्तुध्वनिः ।

अनुत्तम इति—अस्यार्थो मूल एव स्पष्टीभविष्यति ।

अत्रेति—राक्षसकुलं हत्वा पुष्पकविमानेन साकेतं प्रति निवर्तमानो रामः सीतां दर्शयन् प्राह—अत्रेति । हे मृगाक्षि ! हरिणवच्चपलनयने सीते ! अत्र अस्मिन् स्थाने मयि रामे फणिपाशेन सर्पास्त्रेण बन्धनस्य विधिः प्रकारः अभवत् मेघनाद-कृत इति शेषः । गरुडास्त्रेण च पाशमोक्ष इति च । पश्य—अत्र च दूरतो दृश्यमाने स्थाने शक्त्या भवद्देवरे लक्ष्मणे वक्षसि उरसि ताडिते निहते सति (मूर्च्छिते इत्यर्थः । इन्द्रजितेति शेषः) हनुमता द्रोणाद्रिः द्रोणाख्यः पर्वतोऽत्राहृत आनीतः । किञ्चेन्द्रजित् मेघनादोऽत्र दिव्यैर्लोकोत्तरैर्लक्ष्मणशरैर्लोकान्तरं स्वर्गमित्यर्थः । लम्भितः प्रापितः । किञ्च केनापि तव पुरःस्थितेनेत्यर्थः । राक्षसपतेः रावणस्य कण्ठानां गलानां शिरसामिति यावत्, अटवीवाटवीसमूह इत्यर्थः, कृत्ता छिन्नेत्यर्थः । अत्र स्वयं स्वमुखेन स्वयशसः कीर्तनमनुचितमिति 'केनापि' इति पदेन रामेण स्वनामकीर्तनं कृतं तच्च वाच्यार्थसदृशमिति गुणीभूतव्यङ्ग्यस्येदमुदाहरणम् । तथाच 'रामेणात्र' इति पाठेऽपि व्यङ्ग्यार्थो न चमत्कारं जहातीति बोध्यम् । स्पष्टमन्यत् ॥१६॥

भाषार्थ—संलक्ष्यक्रम व्यङ्ग्य का लक्षण करते हैं—यत्रेति । जहाँ पर व्यङ्ग्य ज्ञान का क्रम स्पष्ट प्रतीत होता है, वह संलक्ष्य क्रम व्यङ्ग्य कहलाता है । उसके अनेक भेद हैं । जैसे पृष्ठ १८ पर कहे गये 'कुबेरगुप्ताम्' इत्यादि श्लोक में दक्षिणा शब्द से दाक्षिण्य औदार्य स्वभाव युक्त नायिका रूप वस्तु व्यक्त होती है । यहाँ पर शब्दशक्ति का प्राधान्य है। अतः शब्द-शक्तिमूलक वस्तु ध्वनि का यह उदाहरण है ।

गुणीभूत व्यङ्ग्य का लक्षण करते हैं—अनुत्तम इति । व्यङ्ग्य=व्यङ्ग्यार्थ के वाच्य—वाच्यार्थ से अनुत्तम=अधिक चमत्कारी न होने पर गुणीभूत व्यङ्ग्य कहलाता है । यही मध्यम काव्य कहलाता है । जैसे—राम सीता से कहते हैं कि—यहाँ नागपाश से मेरा बन्धन मेघनाद ने किया था और गरुडास्त्र से राम छूटे थे । यहाँ लक्ष्मण की छाती पर मेघनाद की शक्ति लगने पर हनुमान् जी द्रोण गिरि को उठाकर लाये थे । इस जगह लक्ष्मण के दिव्य बाणों से मेघनाद मारा गया था । हे मृग के समान नेत्र वाली ! इस जगह किसी ने रावण के दस सिर काटकर उसे सुरपुर पहुँचाया था ।

यह वचन, लङ्का से जब श्रीरामचन्द्र भगवान् सीता समेत अयोध्या को लौट रहे थे, तब कहे थे। यहाँ अनुनायक ( हनुमान् ), उपनायक ( लक्ष्मण ), प्रतिनायक ( रावण ) के दिखा देने पर चतुर्थ चरण में नायक राम ही अर्थ शक्ति से प्रतीत हो जाता है। वह नायक 'केनापि—किसी ने' ऐसा कहने से वाच्य जैसा होने के कारण अगूढ हो गया है। अतः व्यङ्ग्य का चमत्कार नष्ट हो गया है, वह वाच्य जैसा ही है।

चित्रकाव्यमाह—

'व्यङ्ग्यार्थहीनं काव्यं यत् तत्तु चित्रमिति स्मृतम् ॥'

चित्रमिति—गुणालङ्कारयुक्तम्, व्यङ्ग्यार्थहीनम्—स्फुट-प्रतीयमानव्यङ्ग्यार्थरहितम्; तच्च अधमं काव्यमुच्यते।

तस्य भेदावाह—

'शब्दचित्रं वाच्यचित्रं द्विविधं तत्प्रकीर्त्तितम्।'

यत्र वाच्यार्थात् शब्दस्य प्राधान्येन चमत्कारित्वं, तत् शब्द-चित्रम्। यथा—

कूजत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाऽऽडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥२०॥ [उ० च०]

यत्र शब्दात् वाच्यार्थस्य प्राधान्येन चमत्कारित्वं तद् वाच्य-चित्रम्। यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥२१॥

इति काव्यभेदप्रभेदो नाम तृतीयशिखा समाप्ता।

---

**टीका**—व्यङ्ग्यार्थेति—व्यङ्ग्यार्थेन हीनं रहितं यत्तु काव्यं भवति तत् चित्रमिति चित्रशब्देन स्मृतं स्मर्यते इत्यर्थः । तस्य द्वैविध्यमाह—शब्देति । तच्चित्र-काव्यं शब्दचित्रवाच्यचित्रभेदाभ्यां द्विविधं भवति । यथा—**कूजदि**ति । कूजन्तीनां अव्यक्तशब्दं कुर्वतीनाम्, कुञ्जा एव कुटीराणि तत्र स्थितानां कौशिकानामुलूकानां घटानां समुदायानां यो घूत्कारो घू घू इति शब्दस्तद्वन्तो ये कीचका वंशविशेषा-स्तेषां स्तम्बस्य संघस्य य आडम्बर औद्धत्यं तत्र (कौशिकभयेन) मूकं निःशब्दं निषण्णं मौकुलीनां वायसानां कुलं यत्र तादृशः । अयं पुरोवर्ती क्रौञ्चावतः 'क्रौञ्चवान्नाम पर्वतः । स्वार्थेऽण् प्रत्ययः । 'अन्येभ्योऽपि दृश्यन्ते 'इति पाणिनि-शासनेन मतुपि परतो दीर्घेण रूपं साधु । एतस्मिन् गिरौ प्रचलतां भ्रमतां प्रचलाकिनां मयूराणां कूजितैः ध्वनिभिरुद्वेजिताः उद्वेगं प्रापिताः भीता इति यावत् । कुंभीनसाः सर्पाः । पुराणचन्दनतरुस्कन्धेषु पुरातनचन्दनवृक्षस्कन्धेषु । शाखोद्गमस्थानं स्कन्धः, तत्र मयूरवाशितभयान्निलीनतयाऽवस्थानं संभवति । यद्वा भीत्या स्कन्धान् समासज्य तिष्ठन्ति न च पलायन्ते । उद्वेल्लन्ति—इतस्ततो भीताः स्कन्धेषु निलीय तिष्ठन्तीति भावः । शार्दूलविक्रीडितम् । अत्र ककारानुप्रासप्राधान्यमिति शब्दचित्रता ॥२०॥

वाच्यचित्रोदाहरणमाह—**त** इति । कश्चित् कथयति—ते खलाः पद्मलदृशां मृगाक्षीणामित्यर्थः, अलकाश्चूर्णकुन्तलाश्च, दृष्टिमात्रपतिता अपि दृष्टिमात्रे समागता अपि कस्य क्षोभाय मनःखेदायाऽत्र संसारे न भवन्ति । द्वयोरपि सायुज्य-जूंषि विशेषणान्याह—नीचाः खलपक्षे वृत्ततः । कचपक्षे कङ्कतादिप्रयोगेण समी-कृता अधोगामिनो वेत्यर्थः । सदैव सविलासं विलासेन सहितं कचपक्षे विलासः शोभा सौन्दर्यम्, खलपक्षे प्रीतिः । अलीके खलपक्षे मिथ्यासमाचारसंचये, कचपक्षे ह्रस्वदीर्घमात्राभेदमनादृत्य ललाटे लग्नाः स्थैर्यवन्तः । किंच ये खलादयः कालतां कचपक्षे कृष्णवर्णवत्ताम्, खलपक्षे यमसादृश्यं कुटिलतामिव कौटिल्यवच्च त्यजन्ति परिहरन्तीत्यर्थः । स्वभावतो वक्रतावन्तः केशाः यथा वक्रस्वभावतां न त्यजन्ति तथैव कुटिलाशयाः स्वस्वभावं न रहयन्तीत्यर्थः । स्पष्टमन्यत् । वसन्ततिलकं वृत्तम् । अत्र द्व्यर्थकशब्दबलेनार्थानुसन्धानमूलकश्चमत्कार इत्यर्थ-चित्रस्येदमुदाहरणम् ॥२१॥

**भाषार्थ**—चित्र काव्य का लक्षण करते हैं—व्यङ्ग्य अर्थ से रहित जो काव्य होता है, वह चित्र काव्य कहलाता है । चित्र=गुण और अलङ्कार से

युक्त। व्यङ्ग्यार्थहीन=स्पष्ट प्रतीयमान व्यङ्ग्य अर्थ से शून्य नकि बिलकुल ही शून्य। यही चित्र काव्य अधम काव्य कहाता है।

शब्देति—चित्र काव्य दो प्रकार का है—शब्दचित्र तथा वाच्यचित्र। जहाँ पर वाच्यार्थ से शब्दविन्यास का चमत्कार विच्छित्ति का पोषक हो, वह शब्दचित्र कहाता है। जैसे—गूँजते हुए जो कुञ्जरूपी कुटिया में रहने वाले उल्लुओं के झुण्ड, उसकी घू घू की आवाज वाला जो कीचक नामक बाँसों के समुदाय का विस्तार उसमें डर के मारे चुप, शान्त बैठे हुए कौओं के समुदाय वाला यह क्रौञ्चवान् नामक पर्वत है अर्थात् जहाँ इतना अँधेरा है कि उल्लू दिन में बसेरा करते हैं और उनके डर से कौए बाँसों पर भी चुप बैठे रहते हैं। तथा यहाँ पर घूमने वाले मोरों की आवाज से डरे हुए सर्प पुराने चन्दन के पेड़ों के गुद्दों पर या उनकी जड़ों में वहीं कुण्डलाकार बने पड़े रहते हैं या लपेट लेते रहते हैं, मजाल नहीं जो जमीन पर स्वतन्त्रता से घूम फिर भी सकें। यहाँ पर अर्थ तो साधारण है पर कवर्ग शब्दों की महिमा ही इसे काव्य बना रही है।

जहाँ शब्दों की अपेक्षा वाच्यार्थ अधिक चमत्कारक हो, वहाँ अर्थचित्र नाम का अधम काव्य होता हैं। जैसे—कोई कवि सिर के बालों और खलों की तुलना करता है कि वे सुन्दर स्त्रियों के बाल और वे कुटिलता में नामी दस नम्बरी खल किसके चित्त में क्षोभ=विषयवासना पीडातिशय नहीं पैदा करते अर्थात् प्रत्येक के करते हैं। दोनों ही नीच हैं। खल नीच प्रकृति के हैं। बाल भी झुके हुए हैं, कंघी वगैरह से। जो अलीक=झूठे परच्छिद्र दर्शन में लगे रहते हैं तथा सिर पर रक्खे हुए हैं। तथा जो दोनों कालता=कृष्णता और यमराज के जैसी क्रूरता को व कुटिलता को नहीं छोड़ते हैं। यहाँ द्वयर्थक शब्दों के बल से अर्थमूलक चमत्कार है।

---

## प्रश्नोत्तरमाला

इति प्रश्नोत्तरसहिता तृतीयशिखा समाप्ता।

---

# चतुर्थशिखा

अथ दृश्यश्रव्यभेदेन काव्यविभागः—

एवं ध्वनिगुणीभूतव्यङ्ग्यचित्रत्वेन काव्यस्य भेदत्रयमुक्त्वा, पुनर्दृश्यश्रव्यत्वभेदेन भेदद्वयमाह—

'दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।'

[ विश्वनाथः ]

दृश्यकाव्यलक्षणम्—

'दृश्यं तत्राभिनेयं तद्रूपाऽऽरोपात्तु रूपकम् ॥'

[ विश्वनाथः ]

अभिनेयम्—अभिनययोग्यम्, तच्च दृश्यं काव्यं, नटैः रामाऽऽदिस्वरूपाऽऽरोपाद्रूपकमिति च कथ्यते ।

अभिनयस्य स्वरूपं भेदाश्च कथ्यन्ते—

'भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥'

नटैरङ्गेन, वाचा, वस्त्रालङ्कारादिभिः, मानसभावैश्च रामयुधिष्ठिराऽऽदीनामवस्थाऽनुकरणमभिनयः ।

दृश्यकाव्यानि कानिचित् रूपकनाम्ना, अपराणि उपरूपक-

नाम्ना कथ्यन्ते । तत्र रूपकाणि—नाटकप्रकरणप्रहसनप्रभृतीनि दशविधानि, उपरूपकाणि च—नाटिकात्रोटकाऽऽदीनि अष्टादश-भेदानि। विशेषं विना सर्वेषामेव स्वरूपं नाटकलक्षणसमानम् ।

**टीका**—काव्यभेदद्वयं निरूपयति—दृश्येत्यादिना । अन्यत् सर्वं मूलेनैव नीतार्थम् । भाषाटीकायाञ्च स्पष्टीभविष्यति ।

**भाषार्थ**—ध्वनि, गुणीभूतव्यङ्ग्य और चित्र भेद से काव्य के तीन भेद हैं—यह बतला चुके हैं । अब दृश्य श्रव्य भेद से फिर दो भेद बतलाते हैं । दृश्येति—दृश्य और श्रव्य भेद से पुनः काव्य दो प्रकार का होता है ।

दृश्य काव्य का लक्षण करते हैं—अभिनेय काव्य दृश्य कहाता है । यही दृश्य काव्य रूप के आरोपण करने से रूपक कहलाता है । अभिनेय=अभिनय के योग्य । वही दृश्य काव्य रूपक कहलाता है, जब कि नट रामादि का रूप धारण करके नाटक करता है ।

भवेदिति—अवस्था के अनुकरण को अभिनय कहते हैं । वह आङ्गिक ( अङ्गों से प्रकट करने के योग्य ), वाचिक ( वाणी से उच्चारणीय ), आहार्य ( भूषण वस्त्रादि से किया जाय ), सात्त्विक ( स्तम्भ स्वेदादि सात्त्विक भावों से जन्य ) भेद से चार प्रकार का है । नटों से अङ्ग, वाणी, वस्त्र व अलङ्कार, तथा सात्त्विक भावों से राम और युधिष्ठिर आदि की अवस्था का अनुकरण अभिनय कहा जाता है । कुछ दृश्य काव्य रूपक नाम से तथा कुछ उपरूपक नाम से कहे जाते हैं । रूपक के निम्नलिखित दस भेद होते हैं—नाटक, प्रकरण, प्रहसन, भाण, व्यायोग, समवकार, डिम, ईहा, मृगाङ्क, वीथी । उपरूपकों के भी नाटिका, त्रोटक, गोष्ठी, सट्टक, नाट्यरासक, प्रस्थान, उल्लाप्य, काव्य, प्रेङ्खण, रासक, संलापक, श्रीगदित, शिल्पक, विलासिका, दुर्मल्लिका, प्रकरणी, हल्लीश, भाणिका यह अठारह भेद होते हैं। इन सब का स्वरूप नाटक के लक्षण सदृश ही समझो, यदि आन्तरिक थोड़ी थोड़ी विशेषता का ध्यान न रक्खें ।

नाटकलक्षणमाह विश्वनाथः—

**'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।**
**विलासद्ध्र्यादिगुणवत् युक्तं नानाविभूतिभिः ॥**

सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः ।
एक एव भवेदङ्गी' प्रथमो 'वीर एव वा ॥
अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम् ॥'

ख्यातं—रामायणमहाभारताऽऽदिप्रसिद्धं रामयुधिष्ठिराऽऽदिचरितम्; सन्धयः—वक्ष्यमाणाः, विलासाऽऽदयः—नायकगुणाः, तैर्युक्तम्; सुखदुःखसमुद्भवत्वं रामयुधिष्ठिराऽऽदिवृत्तान्तेषु अभिव्यक्तम्; नानाविधैः रसैः निरन्तरम्—अविच्छिन्नम्; राजर्षयः—दुष्मन्ताऽऽदयः; दिव्याः—श्रीकृष्णाऽऽदयः; दिव्यादिव्यः—यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः । निर्वहणे—पञ्चमे सन्धौ ।

**टीका**—अस्याः कारिकाया अर्थो मूल एव स्पष्टीकृतः ( भाषाटीकायां च )। नायकस्य सामान्यलक्षणन्तु दर्पणकारेणोक्तम् । तथाहि—

'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥'

दक्षः—क्षिप्रकारी, शीलम्—सद्वृत्तम्, एवमादिगुणसम्पन्नो नेता—नायको भवति । स च चतुर्विधः—धीरोदात्तः, धीरोद्धतः, धीरललितः, धीरप्रशान्तश्च ।

तेषां क्रमेण लक्षणमाह स एव । धीरोदात्तलक्षणम्—

'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥'

अविकत्थनः—अनात्मश्लाघाकरः, महासत्त्वः—हर्षशोकाऽऽदिभिरनभिभूतस्वभावः, निगूढमानः—विनयच्छन्नगर्वः, दृढव्रतः—अङ्गीकृतनिर्वाहकः । यथा—रामयुधिष्ठिरादिः ।

धीरोद्धतलक्षणम्—

'मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥'

माया—कपटाऽऽचारः, तत्परायणः । यथा—भीमसेनादिः ।

धीरललितलक्षणम्—

'निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।'

कलाः—नृत्याऽऽदिकाः । यथा—रत्नावल्यां वत्सराजः ।

धीरप्रशान्तलक्षणम्—

'सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ।'

यथा—मालतीमाधवे माधवः । प्रकरणादिषु विशेषाः कथ्यन्ते विश्वनाथेन—

'भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
आदिमोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ॥
सापायधर्मकामार्थपरो धीरप्रशान्तकः ।'
'नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ॥'

यथा—मृच्छकटिकमालतीमाधवादि । सर्वमिदमानुषङ्गिकमेव ।

प्रहसनलक्षणम्—

भवेत् प्रहसने वृत्तं निन्द्यानां कविकल्पितम् ।
अङ्गी हास्यरसो नात्र विष्कम्भकप्रवेशकौ ॥

यथा—वसन्ततिलक—हास्यार्णव—कौतुकसर्वस्वादि । नाटिकालक्षणम्—

'नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ।
नवानुरागा कन्याऽत्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेत् ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात्कौशिकी स्वल्पविमर्षाः सन्धयः पुनः ॥

विमर्षः—चतुर्थः सन्धिः । यथा—रत्नावल्यादिः ।

स्वल्पेति—स्वल्पः विमर्षस्तदाख्यः सन्धिविशेषो येषु तादृशाः सन्धयो भवन्ति। प्रायेण विमर्षसन्धिहीना इत्यर्थः। शिष्टं स्पष्टम्।

नाटकलक्षण—

भाषार्थ—नाटक का आधारभूत वृत्त प्रसिद्ध होता है। नाटक में पाँच सन्धियाँ होती हैं; सन्धियों का लक्षण आगे चलकर मूल में लिखेंगे। नाटक विलास और ऋद्धि आदि गुण युक्त होता है। अनेक ऐश्वर्यों से युक्त होता है। सुख-दुःख का पर्याय से उद्भव होता रहता है। अनेक रसों का सिलसिला नहीं टूट पाता। कम से कम पाँच और अधिक से अधिक दस अङ्क होते हैं। मशहूर खानदान का राजर्षि, धीरोदात्त, प्रतापी नायक होता है। वह दिव्य, अदिव्य, या दिव्यादिव्य इस तरह तीन प्रकार का होता है। चार या पाँच मनुष्य कार्य में मुख्यतया भाग लेते हैं। अङ्गी (प्रधान) रस एक ही होता है, शृङ्गार या वीरादि में से कोई एक। बाकी रस अप्रधानभूत रहते हैं। तथा अन्त में समाप्ति पर नाटक को अद्भुत बना देना चाहिये।

ख्यातमिति—ख्यात=रामायण महाभारत आदि में प्रसिद्ध राम युधिष्ठिर आदि का चरित। सन्धियाँ आगे कहेंगे। विलासादि नायक के गुण हैं। उनसे नायक युक्त होना चाहिये। सुखदुःख की उत्पादकता राम युधिष्ठिर आदि के वृत्तान्त में स्पष्ट ही है। नाना रसों से निरन्तर अविच्छिन्न होना चाहिये। राजर्षि=दुष्यन्त आदि। दिव्य=श्रीकृष्णादि। दिव्यादिव्य=जो दिव्य होते हुए भी अपने को अदिव्य अर्थात् मनुष्य समझे। जैसे—भगवान् रामचन्द्र। निर्वहण=उपसंहार नामक पञ्चम सन्धि में अद्भुत बना देना चाहिये। इनके विशेष लक्षण आदि संस्कृत टीका में देखिए।

अङ्कलक्षणमाह—

'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
नानाविधानसंयुक्तो बीजसंहृतिमान् न च॥
युक्तो न बहुभिः कार्य्यैर्नातिप्रचुरपद्यवान्।
आवश्यकानां कार्य्याणामविरोधात् विनिर्मितः॥
नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजितः।

आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
बधयुद्धविवाहाद्यैर्वर्जितो नातिविस्तरः ।
देवीपरिजनाऽऽदीनां प्रत्यक्षचरितैर्युतः ॥
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥'

भावाः—देवाऽऽदिविषयकरत्यादयः, बीजस्य संहृतिः—सङ्कोचः ।

टीका—अङ्कलक्षणमाह—प्रत्यक्षेति । प्रत्यक्षं प्रत्यक्षवत् प्रतीयमानं नेतुर्नायकस्य चरितं यत्र तादृशः । रसभावाभ्यां समुज्ज्वलः समुद्भासितः । नानाविधानैरनेकविधव्यापारैः संयुक्तोऽलङ्कृतः, बीजस्य कारणस्य संहृतिर्नाँश्च न स्यात् । बहुभिः कार्यैर्युक्तो न स्यात् । अनेकैर्दिनैर्निर्वर्त्यया कथया सम्प्रयोजितो न स्यात् । अन्ते निष्क्रान्तानि निखिलानि पात्राणि यस्मिन् सोऽङ्क इति कथ्यते । बीजलक्षणम्—

'स्वल्पमात्रं समुद्दिष्टं बहुधा यद् विसर्पति ।
फलावसानं यच्चैवं बीजं तदिह कीर्त्तितम् ॥' [ भरतः ]

भाषार्थ—प्रत्यक्षीभूत है नेता का चरित जहां पर, रस और भावों से प्रकाशित, अनेक क्रिया कलाप से संयुक्त, बीज की संहृति—संहार से युक्त न हो—एकदम मूलोच्छेद न कर दिया जावे । आवश्यक सन्ध्या वन्दनादि कार्यों के विरोध से निर्मित न हो । अनेक दिनों तक समाप्य कथा से भी युक्त न हो । नायक का जिक्र पास पास में पदे पदे अवश्य होना चाहिये । एक अङ्क में तीन चार पात्रों से अधिक पात्र न हों । वध, युद्ध और विवाह, आदि पद से राज्यभ्रंश, मरणादि से रहित हो । देवी=रानी, नौकर चाकर आदि के चरित्रों का चित्रण प्रत्यक्ष किया हुआ हो । तथा अन्त में सारे पात्र का निर्गमन वर्णित हो, ऐसा अङ्क होता है । भाव=देवादिविषयक अनुरागादि । बीज की संहृति=सहसा संकोच—बन्द कर देना ।

नाटकीयपूर्वकृत्यम्—

'तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञाऽऽदेर्नाटकस्याप्यथाऽऽमुखम् ॥'

तत्र—नाटके, सभापूजा—विनीतवचनाऽऽदिना सभ्यानाम् आभिमुख्यसम्पादनम्, आमुखम्—प्रस्तावना।

पूर्वरङ्गस्य लक्षणमाह—

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥'

अस्य नान्दीनामाङ्गस्य स्वरूपमाह भरतः—

'देवद्विजनृपाऽऽदीनामाशीर्वादपरायणा।
नन्दन्ति देवता यस्मात्तस्मान्नान्दीति संज्ञिता॥'

सूत्रधारः नान्दीं प्रयोज्य काव्यार्थसूचकैर्मधुरैर्वचनैः रङ्गस्थान् सभ्यान् प्रसाद्य रूपकस्य कवेश्च आख्यां, कवेः गोत्राऽऽद्यपि कीर्त्तयेत्।

टीका—नाटकीयपूर्वकृत्यमाह—तत्रेति। नाट्यवस्तुनः नाट्यारम्भात् पूर्वं रंगस्य नाट्यस्थलस्य विघ्नानामुपशान्तये शान्त्यै यत् कुशीलवा नराः प्रकुर्वन्ति स पूर्वरङ्ग उच्यते। नान्दीं लक्षयति—देवाः द्विजाः नृपादयश्च तेषामाशीर्वादः आशीर्वचनं तदेव परमयनं स्थानं यस्याः सा तदेकाश्रयेति यावत्। यस्माच्च देवता नन्दन्ति तस्मान्नान्दीति संज्ञिता संज्ञा संजाताऽस्या इति संज्ञिता भवतीत्यर्थः। अन्यत् स्पष्टम्।

भाषार्थ—नाटक का पहला काम बतलाते हैं। नाटक में पहले पूर्वरङ्ग होता है। फिर सभा की पूजा, फिर कवि के नाम का, गोत्रादि का कीर्तन होता है। इसके बाद आमुख की बारी आती है। वहां=नाटक में। सभापूजा=विनीत वचनादि से सभासीन सभ्यों का ध्यान अपनी ओर आकृष्ट करना। आमुख=प्रस्तावना। जो काम नाट्यशाला में नाटक खेलने से पूर्व रंगशाला में हुए हुल्लड़ या उपद्रव को शान्त करने के लिये नट लोग गाना बजाना जोर शोर से करते हैं, इसी का नाम पूर्वरङ्ग है। नान्दी का लक्षण करते हैं—देवता, द्विज, राजा तथा ब्राह्मण आदि का आशीर्वाद लेने को उद्यत। तथा जिसके कारण देवता भी खुश हो जाते हैं। उसका नाम 'नान्दी' है। सूत्रधार नान्दी को करने के बाद काव्यार्थसूचक मधुर वचनों से रंगभवन=नाट्यशाला

में स्थित सभ्यों को प्रसन्न करके रूपक और कवि के नाम धाम का व गोत्र ( विद्यापरम्परा ) का कीर्तन करे।

**अथ प्रस्तावना। तल्लक्षणमाह भरतः—**

प्रस्तावनास्वरूपम्—

**'नटी विदूषको वाऽपि पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥**
**चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताऽऽक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥'**

**नटीति स्त्रीत्वमविवक्षितं, प्रस्तुतस्य आक्षेपिभिः—उद्बोधकैः। तद्भेदाः कथितास्तेनैव—**

प्रस्तावनाभेदाः—

**'उद्घात्यकं कथोद्घातः प्रयोगातिशयस्तथा।**
**प्रवृत्तकावलगिते आमुखाङ्गानि पञ्च वै॥'**

**टीका**—यत्र संदर्भे। यत्रेति यदित्यर्थेऽव्ययमिति तु जीवानन्दः। नटी अथवा विदूषकोऽथवा पारिपार्श्विक एषु एकतमः सूत्रधारेण, सूत्रम् अभिनयानुष्ठानं धारयतीति सूत्रधारः, अयमेव च स्थापकपदेनाप्यभिधीयते, सह संलापं वार्तालापं कुर्वते कुर्वन्तीत्याह—चित्रैः विचित्रैः स्वकार्योत्थैः स्वकार्यवशादुत्पन्नैः प्रस्तुतसूचकैर्वाक्यैः संलापं कुर्वते तदामुखं विज्ञेयम्।

उद्घात्यक—कथोद्घात—प्रयोगातिशय—प्रवृत्तक—अवलगितभेदेन पञ्चभेदमामुखं भवति। दर्पणे तु—उद्घात्यकः, प्रवर्तकः—इति पाठौ दृश्येते। स्पष्टमन्यत्।

**भावार्थ**—जहाँ, नटी विदूषक अथवा पारिपार्श्विक इनमें से एक सूत्रधार के साथ चित्र-विचित्र प्रतिभासूचक प्रस्तुतार्थसूचक वाक्यों द्वारा स्वकार्य-वश से परस्पर बातचीत करते हैं, उसे आमुख या प्रस्तावना कहते हैं ( स्थापक भी सूत्रधार का नामान्तर समझना चाहिए )।

एषां क्रमेण लक्षणमाह स एव—

उद्घात्यकलक्षणम्—

पदानि त्वगतार्थानि तदर्थगतये नराः।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥

अगतः—अबोधित इति यावत्, अर्थः—हृद्गतो यैस्तानि, तस्य—हृद्गतस्य, अर्थस्य गतये—बोधनाय। यथा मुद्राराक्षसे—

'सूत्र। क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलात्— ॥२२॥

* * *

अनन्तरं [ नेपथ्ये ]। आः! क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात्?'

अत्र अन्यार्थवन्त्यपि पदानि हृद्गतार्थबोधनविरहात् पदान्तरैर्योजयित्वा पात्रप्रवेशः।

कथोद्घातलक्षणम्—

'सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते ॥'

वाक्यमादाय रत्नावल्यां यथा—

द्वीपादन्यस्मादपि जलनिधेर्मध्यादपि दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूय ॥२३॥

इति सूत्रधारेण पठिते—'एवमेवत्, कः सन्देहः? द्वीपादन्यस्मादपि' इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः।

वाक्यार्थं गृहीत्वा वेण्यां यथा—

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥२४॥

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये

**साधिक्षेपम्—'आः पाप ! दुरात्मन् ! वृथा मङ्गलपाठक ! ...... स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ?' ततः सूत्रधारो निष्क्रान्तः । अथ भीमसेनस्य प्रवेशः ।**

**टीका**—नराः—नाट्यक्रियाकुशलाः कुशीलवाः । अगतार्थानि अस्फुट-ज्ञायमानार्थानि पदानि । तदर्थगतये—तस्य हृद्गतभावस्य गतये ज्ञानाय अन्यैः पदैः सह योजयन्ति तदुद्घात्य(त)कमुच्यते । यथा—दत्तोदाहरणे चन्द्रमसमिति चन्द्रगुप्तपरकं क्रियते—तेन च प्रविशति पात्रम् ।

सूत्रधारस्येति—स्पष्टम् । **द्वीपेति**—अन्यस्माद् दीपात् जलनिधेः समुद्रस्य मध्यात् अथवा दिशोऽन्तात्प्रान्तभागादपि अभिमतं विधेरिति शेषः, अभिमुखीभूय पुरतो भूत्वा विधिर्घटयति निष्पादयाति इत्यर्थः । आर्यावृत्तम् ॥२३॥

**निर्वाणेति**—निर्वाणं वैरदहनं येषां ते तादृशाः पाण्डुतनयाः पाण्डवाः माधवेन सह नन्दन्तु प्रहृष्टा भवन्तु । रक्तप्रसाधिता शोणितालङ्कृता अनुरागवशीकृता च भूयैस्ते तादृशाः क्षताः व्रणिताः विग्रहा देहा येषां ते तादृशाः विग्रहहीनाश्च कुरुराज-सुताश्च सभृत्याः स्वःस्था स्वर्गे स्थिताः सुस्थाश्च भवन्तु इत्यर्थः । स्पष्टमन्यत् । वसन्ततिलकं वृत्तम् ॥२४॥

**भावार्थ**—जहाँ पर अज्ञेयार्थक पदों को मनुष्य उस अर्थ के परिज्ञान के लिये अन्य पदों से जोड़ बैठते हैं, उसका नाम उद्घात्यक है । अगत—अबोधित । अर्थ—हृद्गत भाव । तस्य=हृद्गत भाव के। गति के लिये=ज्ञान के लिये । जैसे मुद्राराक्षस में—'केतु के सहित क्रूर ग्रह राहु अपूर्ण मण्डल ( घेरा व राज्यचक्र ) वाले चन्द्र को बलपूर्वक तिरस्कृत करना चाहता है । आः ! कौन है, जो अदृढमूल राज्य वाले चन्द्रगुप्त की ओर आँखें भी उठाकर देख ले' । यहाँ चन्द्र शब्द से चन्द्रगुप्त का मतलब लेकर चाणक्य प्रविष्ट हो जाता है । अर्थान्तर वाले पद को स्वाभिप्रेत अर्थ को बोधन न कर सकने के कारण अन्यवाक्यवर्ती पदों से जोड़कर पात्र का प्रवेश हो जाता है ।

सूत्रेति—जहाँ पर सूत्रधार के वाक्य या वाक्यार्थ को लेकर पात्र का प्रवेश हो, उसका नाम कथोद्घात है । जैसे—वाक्य को लेकर रत्नावली में—यौगन्धरायण का प्रवेश होता है । द्वीपादिति—द्वीप द्वीपान्तरों से समुद्र के मध्य में से दिशाओं के ओर छोर से लाकर विधि स्वाभीष्ट अर्थ को सिद्ध

कर देता है। यहाँ—इस श्लोक को दुहराते हुए यौगन्धरायण का प्रवेश हो जाता है।

वाक्यार्थ को लेकर जैसे वेणीसंहार में—वैराग्नि को शान्त करके शत्रुओं के नष्ट हो जाने के कारण पाण्डवगण श्रीकृष्ण के साथ प्रसन्न हों। तथा कुरुराज धृतराष्ट्र के पुत्र रक्त—अनुरक्त व खून, प्रसाधित=वशीकृत—व अलङ्कृत, भू=पृथ्वी वाले, नष्ट देह और नष्ट वैर वाले भृत्यों के सहित स्वस्थ=स्वर्गस्थित और तन्दुरुस्त रहें। 'आः! दुरात्मा व्यर्थ मङ्गल पढ़ने वाले! सूत्रधार! मेरे रहते दुर्योधनादि सुस्थ रहें' यह कहते कहते भीमसेन प्रविष्ट हो जाता है।

प्रयोगातिशयलक्षणम्—

'यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥'

यथा उत्तररामचरिते—

'सूत्र। तत् किमनेन?—एहि, राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः' इति स्तुतिप्रयोगोद्यते सूत्रधारे, नटेन—

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्म्माऽऽसनाद्विशति वासगृहं नरेन्द्रः॥२५॥

इति रामस्यान्तःपुरप्रवेशरूपं स्तुतिप्रयोगमतिशयानं प्रयोगान्तरं प्रयुञ्जानेन सीतारामयोः प्रवेशः प्रयोजितः।

**टीका**—यदीति—एकस्मिन् प्रयोगे प्रसङ्गे यद्यन्यः प्रयोगः प्रसङ्गः प्रयुज्यते। तेन अन्यप्रयोगेण च पात्रस्य प्रवेशः स्यात्तर्हि प्रयोगातिशयनामकः प्रस्तावनाभेदो भवति। यथोत्तरे रामचरिते यदा सूत्रधारो राजद्वारमुपस्थातुमुद्युक्तो भवति तदैव रामसीतयोः प्रवेशः सूचितः। **स्नेहादिति**—जनकः स्नेहात् प्रेमवशात् सभाजयितुं सीतादीन् आप्याययितुमाह्लादयितुमिति यावत् एत्य विदेहेभ्य आगत्य अमूनि दिनानि चोत्सवेनानन्दातिरेकेण नीत्वा यापयित्वाऽद्य विदेहान् नाम स्वराजधानीं गतः। ततो हेतोर्विमनसो दुःखिताया देव्याः सीतायाः परिसान्त्वनायाऽऽश्वासनाय

धर्मासनाद् धर्माधिकरिणकं न्यायकार्यं परित्यज्य नरेन्द्रो रामः वासगृहं विशति। राजकार्यादपि सीतासान्त्वनमतिशयितमिति भावः। स्पष्टमन्यत्। वसन्ततिलकं नाम वृत्तम् ॥२५॥

**भाषार्थ**—यदि एक ही प्रयोग ( प्रसङ्ग ) में दूसरा प्रसङ्ग आ जाय तथा उसके द्वारा पात्र का प्रवेश हो तो उसे प्रयोगातिशय कहते हैं। जैसे—सूत्र०—हमें इससे क्या? चलो! अपने अधिकार के अनुसार राजद्वार पर ही बैठें। राजद्वार की प्रशंसा करें। यहां पर राजद्वार का उपस्थान ( स्तुति ) करने को वह ज्यों ही उद्यत होता है त्यों ही सीताराम का प्रवेश सूचित किया गया। पद्यार्थ—राजा जनक प्रेम से लोगों से मिलने जुलने आये थे। उनके कारण इतने दिन मजे में कट गये। आज वे अपने देश को लौट गये हैं। अतः दुर्मनायमाना सीता को आश्वासन देने के निमित्त राजा रामचन्द्र धर्म-कार्य राजदरबार बर्खास्त करके अन्त:पुर में जा रहे हैं। यहां पर राजद्वार की स्तुति के प्रयोग को अतिक्रमण करने वाला—उससे भी बढ़िया—सीताराम का सम्मेलन कहा गया है, जिससे सीताराम का नाटक में प्रवेश सूचित होता है। अतः प्रयोगान्तर राजद्वार पर सूत्रधार प्रवेश की अपेक्षा अधिक चमत्कारक है।

प्रवृत्तकलक्षणम्—

'कालं प्रवृत्तमाश्रित्य सूत्रभृत् यत्र वर्णयेत्।
तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् ॥'

सूत्रभृत्—सूत्रधारः। यथा—

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तिः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशाऽऽस्यमिव सम्भृतबन्धुजीवः ॥२६॥

ततो रामस्य प्रवेशः।

अवलगितलक्षणम्—

'यत्रान्यस्मिन् समावेश्य कार्य्यमन्यत् प्रसाध्यते।
परानुरोधात् तज्ज्ञेयं नाम्नाऽवलगितं बुधैः ॥

समावेश्य—साहश्यमुद्भाव्य । यथा अभिज्ञानशाकुन्तले—

तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥२७॥

इति पद्ये दुष्यन्तरूपपात्रप्रवेशानुरोधेन तस्मिन्नेव साहश्य-मुद्भाव्य आत्मनो गीतेन हृतत्वरूपं कार्यं निष्पाद्यते इति ।

**टीका**—कालमिति—यत्र प्रवृत्तं कालमाश्रित्य सूत्रधारो वर्णनं कुर्यात् तद्वर्णनाश्रयश्च कस्यचित् पात्रस्य प्रवेशः स्यात्तत् प्रवर्त्तकमिति प्रवृत्तकमित्याख्यं वाऽऽमुखाङ्गं भवति। यथा—**आसादिते**ति। आसादितः प्राप्तः प्रकटः स्पष्टः निर्मलस्य मेघावरणरहितस्य चन्द्रस्य हासः प्रकाशो येन तादृशः, रामपक्षे—प्राप्त॰ कोषोद्वृतदेदीप्यमानचन्द्रहासनामकरावणखड्गविशेषः । विशुद्धा मेघावरणरहिता कान्तिर्यस्य सः । रामपक्षे—विशुद्धा निर्दोषा कान्तिः प्रभा यस्य सः । सम्भृताः प्रफुल्ला बन्धुजीवा नाम पुष्पविशेषा येन तादृशः । पक्षे सम्भृताः पोषिताः बन्धूनां विभीषणादीनां जीवाः प्राणा येन तादृशः । उग्रम्—भयावहम् । रावणपक्षे—कठोरचेतसम्। गाढं तमो यत्र तादृशम्, पक्षे—तमोगुणातिशयवन्तम्। घनानां कालं—वर्षर्तुमित्यर्थः । पक्षे—घनवत्कालं कृष्णवर्णं यद्वाऽतिश्यामवर्णं रावणमित्यर्थः । उत्खाय नाशयित्वा रामः शरत्समय इव प्राप्तः लङ्काया निवृत्तः । वसन्त-तिलकं छन्दः ॥२७॥

अवलगितलक्षणमाह—यत्रान्यस्मिन् वस्तुनि समावेश्य साहश्यमुद्भा-व्यान्यत् कार्यं परस्य भाविनश्चिकीर्षितस्य वस्तुनोऽनुरोधात् प्रसाध्यते, तदवलगित-नाम्ना प्रसिद्धमामुखं भवति—इति बुधैर्ज्ञेयमित्यर्थः । स्पष्टमन्यत् । **तवे**ति—नटो नटीमाह—अहं तव मनोहारिणा गीतरागेण अतिवेगवता मृगेण दुष्यन्तराजेव बलादाकृष्टोऽस्मीत्यर्थः । अत्र गीताकर्णनं दुष्यन्तस्य राज्ञः प्रवेशायेति बोध्यम् ॥२७॥

**भावार्थ**—जहां मौजूदा काल को लेकर सूत्रधार ऐसा वर्णन करे कि उस वर्णन द्वारा किसी पात्र का प्रवेश भी सूचित हो, तो इसे 'प्रवृत्तक' कहते हैं। जैसे—स्वच्छ चन्द्रमा के प्रकाश वाला—स्वच्छ कान्ति वाला—बन्धुजीव पुष्पों को खिलाने वाला शरत्काल घोर अन्धेरे वाले वर्षाकाल को हटाकर प्राप्त हुआ है । राम की तरफ चन्द्रहास खड्ग—जो रावण के मरण से प्राप्त हुआ । प्रकट=मेघावरणरहित । विशुद्ध पद का भी यही अर्थ है । बन्धुओं के

प्राणों को बचाने वाला। गाढ़ अन्धेरे वाले रावण की तरफ बहुत अधिक मात्रा में तामसी प्रकृति वाला। घन के समान काला और घनों—बादलों से काला। शेष अर्थ स्पष्ट है। यहां राम का प्रवेश सूचित होता है।

जहां अन्य कार्य के कारण अन्य में अन्य का सादृश्य बताकर किसी पात्र का प्रवेश कराया जावे, उसे अवलगित कहते हैं। जैसे—अभिज्ञानशाकुन्तल के 'तवास्मि गीतरागेण' इत्यादि पूर्वोक्त पद्य में। यहां पर दुष्यन्त के प्रवेशानुरोध से उसमें वक्ता के सादृश्य का उद्भावन किया जाता है। गीतराग में सारङ्ग का सादृश्योद्भावन राजप्रवेश के लिये है।

प्रस्तावनाऽन्ते रूपकस्य प्रकृतेतिवृत्तमारभेत।

पताकास्थानकप्रयोगस्थलम्—

'पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि।'

इह—रूपके, वस्तुनि—इतिवृत्ते।

तल्लक्षणमुक्तं भरतेन—

पताकास्थानकलक्षणम्—

'यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लीनोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥'

यत्र एकस्मिन् विषये चिन्तिते तत्संसक्तः अपरोऽर्थः अतर्कितेन भावेन बोध्यते, तत् पताकास्थानकम्। यथा उत्तरचरिते—

'रामः। कथं प्रियवचना वत्सासि प्रसुप्तैव!! [ निर्वर्ण्य सस्नेहम् ]

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोः
असावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयः? यदि परमसह्यस्तु विरहः॥२८॥

प्रतिहारी [ प्रविश्य ] देव! उवत्थिदो।

रामः। अयि! कः?

प्रती। आसण्णपरिचारओ देवस्स दुम्मुहो।'

अत्र दुर्मुखोपस्थितिरूपार्थे चिन्तिते, सीताविरहरूपार्थः सूचितः। यथा वा वेण्याम्—

'पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम्' इति दुर्य्योधनेन कथिते, [ प्रविश्य सम्भ्रान्तः कञ्चुकी ] । 'देव ! भग्नं भग्नम्' इत्यनेन वायुना रथकेतनभङ्गरूपार्थे चिन्तिते, भीमेन दुर्य्योधनोरुभङ्गरूपार्थः सूचितः ।

**टीका**—पताकेत्यादि—स्पष्टं सर्वम् ।

यत्रेति—यत्र प्रयोक्ता पात्रविशेषोऽन्यमेवार्थमभिप्रैति, किन्तु सादृश्यादिमहिम्नाऽऽगन्तुकेन पदार्थेन भावेनेत्यर्थः, अन्यदेव कार्यं प्रसाध्यते तत्पताकास्थानकं भवति। स्वार्थे कन्। यथा—**इयमिति**—ममेत्यध्याहृतं प्रतिसप्तम्यन्तप्रयोगमस्मिन्नेव पद्ये आवर्तनीयम्। रामः कथयति—इयं सीता मम गेहे लक्ष्मीः। इयं मम नयनयोरमृतवर्तिका। असावस्याः स्पर्शो मम वपुषि घनचन्दनद्रव इवाभाति। अयं च तस्या बाहुर्मम कण्ठे निवेशितः सन् शिशिरो मसृणश्च मौक्तिकसर इव मुक्तास्रगिवाभाति। अस्याः किंवस्तु प्रियतरं नास्ति, सर्वमेव प्रियतरं किन्तु अस्या विरहो वियोगोऽसह्यः सोढुमशक्यो वर्तते। शिखरिणी छन्दः। स्पष्टमन्यत् ॥२८॥

विशेषवक्तव्यम्—पताकास्थानकस्येदमप्युदाहरणान्तरं बोध्यम् ।

यथा—मुद्राराक्षसे—[चाणक्यः।—'अपि नाम दुरात्मा राक्षसः गृह्येत ?' सिद्धा।—'अज्ज गहीदो'। अन्यच्च—राक्षसः।—'तदपि नाम दुरात्मा चाणक्यवटुः—' इति; दौवारिकः।—[उपसृत्य]। 'जेदु जेदु'। पुनश्च—राक्षसः।—'अभिसन्धातुं शक्यः स्यात्'। दौवारिकः।—'अमच्चो' इत्यादिना अव्यक्तार्थस्य राक्षसवशीकरणरूपस्य चाणक्यविजयस्य च प्रस्तुतस्य सूचनात् पताकास्थानम्; एवं सुधीभिः मृग्यम्। धनिकमते तु—इदं गण्डनामकं प्रस्तावनाऽङ्गं वेदितव्यम्; प्रथमाङ्के चाणक्यवाक्यानन्तरं प्रस्तुतस्य राक्षसवशीकरणरूपस्य सम्बद्धतया 'गहीदो' इत्यस्य, तथा चतुर्थेऽङ्के राक्षसवाक्यानन्तरं प्रस्तुतस्य चाणक्यविजयरूपस्य सम्बद्धतया 'जेदु जेदु' इत्यस्य च सहसाऽभिधानात्। यदुक्तम्—'गण्डः प्रस्तुतसम्बन्धि भिन्नार्थं सहसोदितम्' इति ।

**भाषार्थ**—प्रस्तावना के अन्त में रूपकसम्बन्धी प्राकरणिक विवरण ( इतिवृत्त ) आरम्भ किया जावे। रूपक में ( नाट्य में ) पताकास्थानक का

प्रयोग खूब सोचसमझ कर वर्णित वस्तुओं में करना चाहिए। पताकास्थानक का लक्षण—जहाँ पर प्रयोग करने वाले पात्र को तो अन्य अर्थ विवक्षित हो किन्तु सादृश्यादि के कारण आगन्तुक=प्रतीयमान अर्थ के द्वारा कोई दूसरा ही अर्थ प्रयोग से प्रतीत हो जावे तो उसे 'पताकास्थानक' कहते हैं।

जहाँ पर एक अर्थ के चिन्तित होने पर तत्सम्बन्धी दूसरा अर्थ अचिन्तितरूप से बोधित हो जावे, उसे पताकास्थानक कहते हैं। जैसे, राम—ओहो! प्रिय वचन बोलने वाली छाती पर सो ही गई। ( देखकर प्रेम से ) यह मेरे घर में लक्ष्मी है। मेरी आँखों में अमृतशलाका है। इसका स्पर्श मेरे शरीर पर घन-घनसार वाले चन्दन पङ्क के समान ठण्डक पहुँचाता है। इसका यह मेरे गले में पड़ा कोमल बाहु ठण्डे और चिकने मोतियों के हार जैसा है। क्या कहूँ, इसकी प्रत्येक वस्तु प्यारी है किन्तु इसका विरह ही असह्य है। प्रतिहारी—देव ! उपस्थित है ( विरह, यह शेष है )। राम—कौन ? प्रतिहारी—आपका सर्वदा समीपवर्ती सेवा करने वाला दुर्मुख। यहाँ पर श्लोक में आये 'विरह' पद से यदि 'उपस्थित है' इस प्रतिहारी के वाक्य को जोड़ दें तो सीता-विरह रूप अर्थ सूचित होता है। परन्तु दुर्मुख की उपस्थिति रूप अर्थ विचारित है, विरह नहीं। फिर भी वह सूचित हो गया। अतः यहाँ 'पताकास्थानक' है। अथवा जैसे—वेणीसंहार में—'पर्याप्तमेव करभोरु! ममोरुयुग्मम्—हे! करभोरु! तेरे बैठने के लिये मेरी जङ्घाएँ पर्याप्त हैं' यह वाक्य जब दुर्योधन ने कहा तब कञ्चुकी कहता है—'देव! तोड़ डाला, तोड़ डाला'। इस वाक्य से 'वायु ने रथ का झण्डा तोड़कर गिरा दिया' यह अर्थ विवक्षित होने पर भी 'भीम ने दुर्योधन के ऊरुद्वय को तोड़ डाला' यह अर्थ भी पूर्वापरसम्बन्ध से सूचित हो गया। अतः यह भी पताकास्थानक का उदाहरण है।

अर्थोपक्षेपकाः—

यत्तु युद्धबधाऽऽदिकमन्यच्चानुचितमङ्केष्वदर्शनीयं, तत्सर्वमर्थोपक्षेपकैः विष्कम्भकाऽऽदिभिः सूच्येत। आदिपदेन प्रवेशकाङ्कावतारादयो गृह्यन्ते।

विष्कम्भकस्य लक्षणमाह धनञ्जयः—

'वृत्तवर्त्तिष्यमाणानां कथांऽशानां निदर्शकः।
सङ्क्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥'

वृत्तवर्त्तिष्यमाणानाम्—अतीतानां भाविनाञ्च, निदर्शकः—सूचकः, मध्येन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितः । यथा—रत्नावल्यां प्रथमाङ्कादौ, अभिज्ञानशाकुन्तले च चतुर्थाङ्कादौ ।

टीका—वृत्तेति—वृत्तानां भूतानां वर्तिष्यमाणानां भविष्यतां कथांशानां कथाभागानां प्रकाशकः । संक्षिप्तः—संक्षेपेणोक्तोऽर्थो यस्मिन् स तादृशः । मध्येन—न मुख्येन नापि नीचेन च पात्रेण मध्याभ्यां वा पात्राभ्यां प्रयोजितोऽभिनीतो वा विषयः विष्कम्भपदेनोच्यते । 'मध्यपात्रप्रयोजितः' इत्यस्य स्थाने 'आदावङ्कस्य दर्शितः' इति दर्पणे पाठः । युक्तायुक्तत्वे सुधियः प्रमाणम् ।

भावार्थ—यत्तु इति—जो युद्ध, वध, राज्यनाश आदि अङ्कों में दिखाना अनुचित हो उसे अर्थोपक्षेपक=अर्थसूचक विष्कम्भक आदि से सूचित कर दे । आदि पद से प्रवेशक और अङ्कावतार आदि का ग्रहण किया जाता है ।

वृत्तेति—बीती और आने वाली कथाओं के भागों का सूचक, संक्षिप्त अर्थ वाला, मध्य कोटि के पात्र से या दो मध्य पात्रों नटों से प्रयोग में लाया हुआ विष्कम्भक होता है । वृत्तवर्त्तिष्यमाण=अतीत और भावी । निदर्शक=सूचित करने वाला मध्य श्रेणी के या नटों द्वारा प्रयोजित । जैसे रत्नावली के प्रथमाङ्क के आदि में । और अभिज्ञानशाकुन्तल के चतुर्थ अङ्क के आरम्भ में ।

प्रवेशकलक्षणम्—

'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥'

[ विश्वनाथः ]

अनुदात्तोक्त्या—प्राकृतवचनेन, अङ्कद्वयान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा—वेण्यां तृतीयाङ्कादौ ।

अङ्कावतारलक्षणम्—

'अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥'

यथा—अभिज्ञानशाकुन्तले पञ्चमाङ्कान्ते पात्रैः सूचितः षष्ठाङ्कः तदङ्कस्य अङ्गविशेष इवावतीर्णः।

नाटकलक्षणोक्तसन्धिलक्षणमुक्तं दशरूपके—

'अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति।'

एकेन प्रयोजनेनान्वितानां कथांऽशानामवान्तरैकप्रयोजन-सम्बन्धः सन्धिः।

**टीका**—प्रवेशकं लक्षयति—प्रवेशकोऽनुदात्तानाममहतामुक्त्या वचनेन हेतुना नीचपात्रैः प्रयोजितोऽभिनीतो भवति। किञ्चायमङ्कद्वयस्य द्वितीयाङ्कस्यान्तर्वर्ती भवति। तेन प्रथमेऽङ्केऽस्य प्रतिषेधः। शेषम् अवशिष्टं यथा विष्कम्भके वृत्तकथांश-निर्देशादिकं तथाऽत्रापीति भावः।

अङ्कावतारलक्षणमाह—अंकेति।

यत्र वर्णनेऽङ्कान्ते कस्यचिदङ्कस्यावसाने पात्रैस्तदङ्कस्य पूर्वाङ्कस्य अविभागतोऽङ्गीभावेनापरोऽङ्कोऽवतरति एषोऽङ्कावतार इत्युच्यते। अन्तरेति—एकान्वये एकस्मिन् प्रयोजने सति अन्तरा मध्ये एकेनार्थेन सम्बन्धः परस्परं संयोगः सन्धिरित्युच्यते। स्पष्टमन्यत्।

**भाषार्थ**—जो सामान्य मनुष्य हैं उनकी अनुत्कृष्ट उक्ति होने के कारण नीच पात्रों से प्रयोग में लाया हुआ दो अङ्कों के अन्दर प्रयुक्त होने वाला प्रवेशक होता है। इसके शेष लक्षण कथांशनिदर्शकत्वादि विष्कम्भक के समान समझने चाहिएँ। अनुदात्तोक्ति—उत्कृष्ट (रमणीय) उक्ति न होने से; जैसे वेणीसंहार के तीसरे अङ्क के आरम्भ में। अङ्कावतार का लक्षण—अङ्क के अन्त में पात्रों द्वारा उस अङ्क के अङ्ग रूप से सूचित हुआ आगामी अङ्क अवतीर्ण होता है, उसे अङ्कावतार कहते हैं। जैसे अभिज्ञानशाकुन्तल के पाँचवें अङ्क के अन्त में पात्रों ने छठे अङ्क की सूचना दी तथा वह अङ्क पूर्वाङ्क का अङ्गीभूत होकर आरब्ध हुआ।

सन्धि का लक्षण—एक मुख्य प्रयोजन में अन्वित होने वाले कथांशों का परस्पर एक ही प्रयोजन से संबंध होना संधि कहलाती है। टीका का भी यही अर्थ है।

तद्भेदानाह विश्वनाथः—

'मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः ।'

मुखलक्षणम्—

'यत्र बीजसमुत्पत्तिस्तन्मुखं परिकीर्त्तितम् ।' [ विश्वनाथः ]

यथा—अभिज्ञानशाकुन्तले प्रथमाङ्के दुष्मन्तशकुन्तलयोः परस्परानुरागरूपस्य बीजस्य उत्पत्तिः ।

प्रतिमुखलक्षणम्—

'लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत् ।' [ दशरूपकम् ]

तस्य—बीजस्य । यथा—तत्रैव द्वितीयेऽङ्के दुष्मन्तानुरागस्य नातिपरिस्फुटप्रकाशः ।

गर्भलक्षणम्—

'फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः' ॥ [ विश्वनाथः ]

यथा—तत्रैव तृतीयेऽङ्के उभयानुरागस्य सम्यक् प्रकाशः, मुहुरन्वेषणम्, शकुन्तलाप्रस्थानाऽऽदिना ह्रासश्च ।

विमर्षलक्षणम्—

'यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥' [ दर्पणः ]

यथा—चतुर्थेऽङ्के उत्कर्षं प्राप्तोऽनुरागो दुर्वाससः शापेन विघ्नितः ।

निर्वहणलक्षणम्—

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥' [ दशरूपकम् ]

यथा—तत्रैव सप्तमाङ्के शकुन्तलादुष्मन्तयोर्मेलनरूपतया सर्वकार्य्याणामवसानम् । उपसंहृतेरेव नामान्तरं निर्वहणम् ।

टीका—सन्धिभेदानाह—मुखमिति । मुखलक्षणमाह—यत्रेति । यत्र बीजस्य पूर्वं पृष्ठे प्रोक्तलक्षणस्य समुत्पत्तिः समुद्भवः तन्मुखं मुखाख्य-

सन्धिरित्यर्थः । यथा अभिज्ञानशाकुन्तले मृगयार्थं गतस्य राज्ञो दर्शनं शकुन्तलाया-स्ततस्तत्प्रेमण्यनुरक्तिश्च ।

लक्ष्येति—कियताप्यंशेन लक्ष्यः कियताप्यलक्ष्यश्च । फलेति—फलस्य यः प्रधानोपायस्तस्य किञ्चन प्राक् प्रथममुद्भिन्नस्य प्रकटीभूतस्य सत इत्यर्थः । यत्रेति—गर्भतः=गर्भसन्धेः । अधिकः=अतिरिक्तरूपेणेत्यर्थ । बीजवन्त इति—एकार्थम् एक-प्रयोजनवत्त्वम् । विप्रकीर्णा विक्षिप्ताः प्रयुक्ताः सन्त इत्यर्थः । निर्वहण-मुपसंहृतिरित्यर्थः ।

यत्रेति—यत्र मुख्यस्य—प्रधानस्य, फलस्य उपायः गर्भतः—गर्भसन्धेः, अधिकः—अतिरिक्तः, उद्भिन्नः—प्रकटतां गतः, शापाद्यैः—विघ्नविशेषैरिति भावः, सान्तरायः—सव्याघातः, स विमर्ष इति स्मृतः ।

बीजवन्त इति—बीजवन्तः मुखाद्यर्थाः मुखप्रतिमुखगर्भविमर्षा इत्यर्थः ।

**भाषार्थ**—मुख, प्रतिमुख, गर्भ, विमर्ष, उपसंहार नाम के पाँच सन्धियों के भेद हैं ।

मुखलक्षण—जहाँ पर बीज की उत्पत्ति होती है, उसको मुख कहते हैं । जैसे—अभिज्ञानशाकुन्तल के प्रथमाङ्क में दुष्यन्त और शकुन्तला के परस्परानुराग रूप बीज की उत्पत्ति हो जाती है । प्रतिमुखलक्षण—उस मुख-सन्धिस्थ बीज का कुछ लक्ष्य और कुछ अलक्ष्य प्रकट होना प्रतिमुख कहलाता है । जैसे—शकुन्तला में द्वितीय अङ्क में दुष्यन्तानुराग का अतिस्फुट प्रकाश नहीं होता है । गर्भलक्षण—फल के प्रधानभूत, प्रथम से ही कुछ प्रकट हुए उपाय का जहाँ पर ह्रास और अन्वेषण वाला बार बार समुद्भेद हो, उसे गर्भ कहते हैं । जैसे—शकुन्तला के तृतीय अङ्क में दोनों के प्रेम का सम्यक् प्रकाश हो जाता है, बार बार अन्वेषण होता है, फिर शकुन्तलाप्रस्थान आदि से ह्रास हो जाता है। विमर्षलक्षण—जहाँ पर मुख्य फल का उपाय गर्भसन्धि की अपेक्षा अधिक उद्भिन्न हो किन्तु शापादि के कारण विघ्नयुक्त हो, उसे विमर्षसन्धि कहते हैं । जैसे—शाकुन्तल नाटक में ही चतुर्थ अङ्क में उत्कर्ष को प्राप्त अनुराग दुर्वासा के शाप से विघ्नयुक्त है । निर्वहण लक्षण—बीज से युक्त मुखादि सन्धियों के बिखरे हुए अर्थों का जहाँ एक प्रधान प्रयोजन में यथावत् समन्वय साधित किया जाय, उसे निर्वहण सन्धि कहते हैं । जैसे—शाकुन्तल के सप्तम अङ्क में शकुन्तला और

दुष्यन्त का सम्मिलन रूपी एक अर्थ में कार्यान्तरों का पर्यवसान होता है। उपसंहार का ही दूसरा नाम निर्वहण है।

अथ नाट्योक्तयः—

'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्।
रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्॥
त्रिपताककरेणान्यानपवार्यान्तरा कथाम्।
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्॥
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्॥' [दशरू०]
'प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते।
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः॥
राजर्षिभिर्वयस्येति तथा विदूषकेण च।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च॥
स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः॥
वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम्।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः॥
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः।
वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः।
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः॥
आयुष्मन् रथिनं सूतो वृद्धस्तातेति चेतरैः।
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः॥

शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥
उपाध्यायेति चाऽऽचार्यः कुमारो भर्त्तृदारक ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ।' [दर्पणः]
'हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥' [अमरः]

**टीका**—सर्वश्राव्यमिति—परावृत्येति । परावृत्यान्यस्य यद् रहस्यं कथ्यते तदपवारितमित्यन्वयः । त्रिपताको यः करस्तेनेत्यर्थः । त्रिपताकस्य लक्षणन्तु—'प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि । कुञ्चितश्च तथाङ्गुष्ठः स पताका इति स्मृतः ॥ पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् । त्रिपताकः स विज्ञेयः' इति ।

**भाषार्थ**—अर्थात् सारी अङ्गुलियाँ मिलाकर फैली हुई हों पर अङ्गूठा सिकुड़ा हुआ हो तो उसे पताक (पताका) कहते हैं । यदि पताक कर में अनामिका को टेढ़ा कर ले तो त्रिपताक कर कहा जाता है ।

**टीका**—हण्डे इत्याद्यन्तिमपद्ये क्रमेणान्वयः । देवर्षीत्यादिपदे देवाश्च ऋषयश्च लिङ्गिनश्चेति समास इति विशेषः । स्पष्टमन्यत् ।

सर्वश्राव्यमिति—सर्वेषां श्राव्यं—श्रवणार्हं, प्रकाशं स्यात् । अश्राव्यं स्वगतं मतम् । अन्यस्य परावृत्य—विमुखीभावेन अवस्थाय, यत् रहस्यं—गोप्यं, कथ्यते, तत् अपवारितम् । तिस्रः पताकाः—पताकावत् ऊद्ध्वोत्थापिता अङ्गुलय इत्यर्थः, यस्य तादृशेन—करेण—करस्याङ्गुलित्रयेणेत्यर्थः, अन्यान् अपवार्य्य—आच्छाद्य, कथामन्तरा—कथामध्ये, जनान्ते—जनसमीपे, यत् अन्योऽन्याऽऽमन्त्रणं—परस्परकथोपकथनं, तत् जनान्तिकम् । पात्रं—सम्बोध्य-जनं, बिना, किं ब्रवीषि ? एवम्, इत्यादि अनुक्तमपि श्रुत्वेव एकः यत् ब्रवीति, तत् आकाशभाषितं स्यात् । गमेः—गम्धातोः स्थाने प्रायेण ण्यन्तकः साधिः—साध्धातुः, प्रयुज्यते । प्रायेणेत्यभिधानात् अन्यदपि तत्समानार्थकं प्रयोज्यमिति भावः । अपत्यप्रत्ययेन च—अपत्यप्रत्ययान्तपदेन, इञादिप्रत्यययोगेन इत्यर्थः, दाशरथे ! इत्यादिनेति भावः, सः—राजा, वाच्यः—वक्तव्य सम्बोध्य इत्यर्थः । विप्रः—द्विजः, विप्रैः—अन्यैः ब्राह्मणैः, स्वेच्छया—यथाकामम्, अपत्यप्रत्य-

यान्तेन इति भावः, नामभिर्वा वाच्य इत्यन्वयः, इतरैः—अन्यैश्च, विप्रभिन्नैरित्यर्थः, आर्य्येति—आर्य्य ! इति सम्बोधनेन, विप्रो वाच्य इति शेषः। विदूषकः—'कुसुमवसन्ताऽऽद्यभिधः कर्मवपुर्वेशभाषाऽऽद्यैर्हास्यकरः । कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥' इत्युक्तलक्षणो नर्मसचिवः, राज्ञा वयस्य इति। आचार्यः—उपनीय वेदाध्यापयिता, ('उपनीय दद्वेदमाचार्य्यः स उदाहृतः' इति शास्त्रात्) उपाध्यायेति, शिष्यैः वाच्य इति शेषः। कुमारः भर्त्तृदारक इत्युच्यते, प्रकृतिभिरिति शेषः। अधमैस्तु कुमारकः, सौम्य, भद्रमुख इत्येवं वाच्यः। प्रकृतिभिः—अमात्याऽऽदिभिः, राज्ञः कुमारी, भर्त्तृदारिका इति वाच्या। नीचां प्रति हण्डे इति, चेटीं प्रति हञ्जे इति, सखीं प्रति हलेति आह्वानम्—सम्बोधनं, कार्यमिति शेषः।

**भाषार्थ**—जिसको सब सुनें, उसे 'प्रकाशम्' कहते हैं। जिसको कोई न सुने, उसे 'स्वगतम्' कहते हैं। जो बात किसी एक से छिपाकर दूसरे पात्र से फिर कर कहनी हो, उसे 'अपवारित' कहते हैं। त्रिपताक (अनामिका को झुकाकर सारा हाथ उठाना त्रिपताक कहलाता है) कर से औरों को हटाकर कथा के बीच में जो आपस में जनों के समीप में बातचीत है, उसे 'जनान्तिक' कहते हैं। 'क्या कहते हो' इस प्रकार किसी के न रहते हुए भी बिना कहे अर्थ को मानो सुनाकर कहना है, उसे आकाशभाषित कहते हैं। प्रायः करके णयन्त साधि धातु जाने के अर्थ में प्रयुक्त होता है। नौकर राजा से राजन् ! स्वामिन्! देव ! यों कहकर बोलें। अधम लोग भट्ट! कहकर पुकारें। राजर्षि राजा से वयस्य! कहकर बोले। विदूषक भी इसी प्रकार बोले। ऋषि लोग राजन्! कहें या अपत्यप्रत्ययान्त नाम बोलें। जैसे—पौरव ! दाशरथे! आदि। ब्राह्मण ब्राह्मण से स्वेच्छापूर्वक नाम लेकर या अपत्यप्रत्ययान्त कौशिक ! जामदग्न्य ! आदि शब्दों से व्यवहार करें। अन्य=क्षत्रियादि ब्राह्मण को 'आर्य' कहकर पुकारें। वयस्य! मित्र! या नाम लेकर राजा विदूषक से बोले। पारिपार्श्विक सूत्रधार से हे भाव! कहकर पुकारे। सूत्रधार पारिपार्श्विक को मारिष! कहकर बुलावे। नीच लोग परस्पर अपने समान कोटि के पुरुषों से हण्डे! कहकर पुकारें। उत्तम लोग परस्पर वयस्य! कहकर बोलें। मध्य श्रेणि के लोग परस्पर 'हंहो' कहकर बोलें। बड़े भाई को सब लोग आर्य ! कहकर बोलें। भगवन्! कहकर

देवता, ऋषि और संन्यासियों को सम्बोधन करे। रानी और चेटी से विदूषक हे भवति ! कहकर व्यवहार करे। सारथि रथ के मालिक से आयुष्मन् ! कहकर बोले। वृद्ध पुरुष को युवा और बच्चे तात ! कहें। बेटे, शिष्य और छोटे भाई से वत्स ! पुत्रक ! तात ! या नाम लेकर या गोत्रप्रत्ययान्त सम्बोधन करे। अधम श्रेणि के मनुष्य मन्त्री को आर्य ! कहकर बोलें। ब्राह्मण मन्त्री से हे अमात्य ! सचिव ! कहकर बुलावे; आचार्य से हे उपाध्याय ! राजपुत्र से भर्तृदारक ! कहे। अधम लोग राजकुमार से सौम्य ! भद्रमुख ! इस प्रकार बुलावें। राजा के नौकर-चाकर राजपुत्री को भर्तृदारिका कहें। हण्डे कहकर दासी को, हञ्जे कहकर चेटी को, हला ! कहकर सखी को आवाज दे।

श्रव्यकाव्यस्य लक्षणं भेदांश्चाऽऽह—

'श्रव्यं श्रोतव्यमात्रं तत् त्रिविधं परिकीर्त्तितम्।
पद्यं गद्यञ्च मिश्रञ्च पद्यं चतुष्पदी मतम्॥
जातिर्वृत्तमिति द्वेधा जातिर्मात्राकृतेन तत्।
वृत्तमक्षरसङ्ख्यातं पद्येनैकेन मुक्तकम्॥'
'द्वाभ्यान्तु युग्मकं ज्ञेयं त्रिभिः श्लोकैर्विशेषकम्।
कलापकं चतुर्भिः स्यात् तदूर्ध्वं कुलकं स्मृतम्॥'

**टीका**—श्रव्यकाव्यमाह—श्रव्यमिति। तच्च त्रिविधम्—पद्यं गद्यं मिश्रं च। पद्यं च चतुर्भिः पादैर्युक्तं भवति। स्पष्टमन्यत्।

**भाषार्थ**—जो केवल सुना जा सके, उसे श्रव्य काव्य कहते हैं। वह पद्य, गद्य और पद्यगद्यात्मक ( चम्पू ) भेद से तीन प्रकार का होता है। चार चरणों वाले काव्य को वृत्त कहते हैं। वह जातिच्छन्द और वृत्तच्छन्द भेद से दो प्रकार का है। जाति वह छन्द है, जहाँ मात्राओं की गणना से छन्दो-व्यवस्था की जावे। वृत्त में अक्षरगणना की जाती है। प्रत्येक पद्य स्वतन्त्र हो तो सम्बन्धनिरपेक्ष होने से मुक्तक, दो पद्य इकट्ठे हों तो युग्मक, तीन एकत्रित हों तो विशेषक, चार इकट्ठे हों तो कलापक—इन संज्ञाओं को धारण करता है। इसके बाद यदि ५, ६, ७ आदि संख्या के श्लोक एकत्रित हों तो सब कुलक नाम से कहे जाते हैं।

पद्यमयस्य महाकाव्यस्य लक्षणमुक्तं काव्यादर्शे—

'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम् ॥
इतिहासकथोद्भूतमितरद् वा सदाश्रयम् ।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥
नगरार्णवशैलर्तुचन्द्रसूर्य्याऽऽदिवर्णनैः ।
अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम् ॥
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ।
सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् ॥
काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ॥'

यथा—रामायण-रघुवंश-शिशुपालबध-नैषधचरिताऽऽदि ।

**टीका**—सर्गैर्बन्धो यस्य सः । इतिहासकथाभिरुद्भूतम् उत्थितम् । इतरत्—कविकल्पितमित्यर्थः । सदाश्रयम्—उत्कृष्टार्थाधारम् । धर्मार्थकाममोक्षाश्चतुर्वर्गः । रसैर्भावैः—"सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।" इत्युक्तैः निरन्तरं व्याप्तम् । सन्धयो मुखादयः पूर्वोक्ताः । सती विद्यमानाऽलङ्कृतिरलङ्कारो यत्र तत्तादृशमलङ्कारोपेतमित्यर्थः । भिन्नं भिन्नं वृत्तमन्ते सर्गसमाप्तौ यत्र तादृशैः ।

**भाषार्थ**—जिसमें अनेकों सर्ग हों, वह महाकाव्य होता है । उसका लक्षण यह है कि पहले आशीर्वाद, नमस्कार, या वस्तुनिर्देश द्वारा उसका आरम्भ होता है । इतिहास की कथा उसका आधार हो, शेष बातें उत्कृष्ट आधार वाली हों । धर्मार्थ काम मोक्ष फलदायक हो, चतुर और उदार नायक हो । नगर, अर्णव, पर्वत, ऋतु, चन्द्रमा, सूर्य आदि के वर्णन से अलङ्कृत हो । संक्षिप्त न हो । रस और भावों की लड़ी जड़ी हो । सर्ग लम्बे लम्बे न हों । उनके छन्द गाने व सुनने योग्य हों । ( मुखादि ) सन्धियाँ अच्छी हों । भिन्न भिन्न छन्दों में सर्ग की समाप्ति के श्लोक हों । लोकरञ्जक हो ।

अलङ्कारों से अलङ्कृत हो। ऐसा महाकाव्य कल्पान्तर=महाप्रलय के बाद सृष्टि के आरम्भ तक स्थित रहता है। जैसे—रामायण, रघुवंश आदि ।

खण्डकाव्यलक्षणम्—

'खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च।'

यथा—मेघदूतादि ।

गद्यलक्षणम्—

'वृत्तबन्धोज्झितं गद्यं' तद्भेदास्तु कथाऽऽदयः ।

यथा—कादम्बर्य्यादि ।

चम्पूलक्षणम्—

'गद्यपद्यमयं मिश्रं चम्पूरित्यभिधीयते।'

पद्यमिश्रत्वञ्चात्र बाहुल्येनेति ज्ञेयम्। ततश्च कादम्बर्य्यादिषु एकद्वित्रिपद्यसत्त्वेऽपि न तेषां गद्यकाव्यत्वहानिः ।

इति दृश्यश्रव्यत्वभेदेन काव्यप्रभेदनं नाम चतुर्थशिखा ।

---

टीका—कथालक्षणम्—"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्। क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके। आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥" आख्यायिकालक्षणम्—आख्यायिका कथावत्स्यात् कवेर्वंशानुकीर्तनम्।

अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित् ॥ इत्यादि ।

वृत्तस्य बन्धेनोज्झितं विरहितमित्यर्थः। अन्यत् स्पष्टम् ।

इति चतुर्थशिखा समाप्ता ।

भाषार्थ—खण्डेति—खण्डकाव्य वह होता है, जो काव्य के एकदेश का अनुसरण करे। जैसे—मेघदूत आदि ।

वृत्तेति—वृत्त (छन्द) के बन्ध या गन्ध से जो रहित हो, उसे गद्य कहते हैं। उसके भेद कथा आख्यायिका आदि हैं। जैसे—कादम्बरी ।

गद्येति—गद्य और पद्य से युक्त काव्य चम्पू कहलाता है। पद्यों का मिश्रण अधिकतया होना चाहिये। अतएव कादम्बरी आदि में १-२ श्लोकों के होने पर भी वे चम्पूकाव्य नहीं कहलाते किन्तु गद्यकाव्य ही कहे जाते हैं।

---

## प्रश्नोत्तरमाला



**इति प्रश्नोत्तरसहिता चतुर्थशिखा समाप्ता ।**

---

# पञ्चमशिखा

दोषस्वरूपं तद्भेदांश्चाऽऽह—

**काव्यापकर्षका दोषास्ते पुनः पञ्चधा मताः ।**
**पदपदांशवाक्यार्थरसानां दूषणेन हि ॥**

ये खलु पदवाक्यरसाऽऽदिदूषणद्वारेण काव्यस्यापकर्षमुत्पादयन्ति, ते नाम दोषनाम्ना कथ्यन्ते । ते पुनः पदपदांशवाक्यअर्थरसदूषणद्वारेण काव्यं दूषयन्तीति प्रथमतः पञ्चविधाः । तत्र—

पदमात्रगताः दोषाः—

**निरर्थकासमर्थत्वे च्युतसंस्कृतित्वञ्च पदगतान्येव ।**

**निरर्थकत्वम्—अर्थहीनत्वम् । यथा—'च, वा, हा'ऽऽदीनि वृत्तपूरणमात्रप्रयोजनानि रामायणाऽऽदिषु बाहुल्येन द्रष्टव्यानि ।**

**असमर्थत्वं—तदर्थे पठितमपि तस्य अवाचकत्वम् । यथा—'कुञ्जं हन्ति कृशोदरी' इत्यत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम् ।**

**च्युतसंस्कारत्वं—व्याकरणलक्षणहीनत्वम् । यथा—**

**'गाण्डीवी कनकशिलानिभं भुजाभ्या-**
**माजघ्ने विषमविलोचनस्य वक्षः ।'** [किरातार्जुनीयम्]

**'आङो यमहनः' [१।३।२८ पा० ] 'स्वाङ्गकर्मकाच्च' [ पा० १।३।२८ सू० वा०] इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्याकर्मकस्य चाऽऽत्मनेपदं नियमितम् । इह तु तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् ।**

**टीका**—काव्यस्यापकर्षका हीनताकारका दोषा भवन्ति । ते दोषाः पञ्चधा पञ्चप्रकारा मता ज्ञाताः । पञ्चप्रकारत्वमेवाह—पदेत्यादिना । कुञ्जं निकुञ्जं प्रति कृशोदरी क्षाममध्या ललना हन्ति गच्छतीत्यर्थः । **गाण्डीवीति**—गाण्डीवनामकधनुर्धरोऽर्जुनः कनकशिलानिभं स्वर्णपट्टसमानं विषमविलोचनस्य त्रिनयनस्य वक्षः उरःस्थलम्, आजघ्ने प्रजहार । पद्यांशोऽयम् । प्रहर्षिणीवृत्तम् । अन्यन्निगदनीतार्थम् ।

**भाषार्थ**—काव्य के अपकर्ष को दोष कहते हैं । यह दोषों का सामान्य लक्षण है । वे दोष पाँच प्रकार के माने जाते हैं । वे दोष—पददोष, पदांशदोष, वाक्यदोष, अर्थदोष और रसदोष भेद से पाँच प्रकार के हैं । जो पद, वाक्य, रस आदि का दूषण करते हुए काव्य के अपकर्ष को करते हैं, उन्हें दोष कहते हैं । और वे पददोषादि भेद से पाँच प्रकार के हैं । उनमें से निरर्थकत्व, असमर्थत्व, च्युतसंस्कारत्व यह पदमात्रगत ही दोष कहे जाते हैं । निरर्थकत्व=अर्थराहित्य । जिस प्रकार च, वा, ह आदि छन्दःपूर्तिमात्र के लिये हैं, रामायण महाभारतादि में बहुधा प्रयुक्त हैं । असमर्थत्व=

उस अर्थ में प्रयोग के व्याकरणकोशादि के बल से ठीक होने पर भी जो उस अर्थ का वाचक न हो। जैसे—'कुञ्जं हन्ति कृशोदरी—कृशोदरी कुञ्ज को जाती है' यहाँ पर हन् धातु गमन अर्थ में पठित होने पर भी उस अर्थ में समर्थ नहीं है। पदान्तर के सान्निध्य में तो 'पद्धति' आदि पदों में गमनार्थ-वाचक हन् धातु है। च्युतसंस्कारत्व=व्याकरणलक्षणहीनता। जैसे—गाण्डीवधारी अर्जुन ने सुवर्ण की शिला के समान विशाल—शिव जी के वक्षःस्थल को आहत किया। यहाँ 'आजघ्ने' इस प्रयोग में आत्मनेपद का प्रयोग है, जो कि 'आङो यमहनः' (१।३।२८) इस सूत्र में पठित 'स्वाङ्ग-कर्मकाच्चेति वक्तव्यम्' इस वार्त्तिक के सहकार से स्वाङ्गकर्मक, अकर्मक आङ्पूर्वक हन् धातु से विहित है। यहाँ पर पराङ्गकर्मकता स्वाङ्गकर्मकता नहीं अतः अयुक्त है। व्याकरण-नियम का लङ्घन करके किया गया है। यही यहाँ च्युतसंस्कारत्व दोष है।

पदवाक्यगताः दोषाः—

दुःश्रवानुचितार्थत्वे ग्राम्यत्वं निहतार्थता।
क्लिष्टत्वमप्रतीतत्वं विरुद्धमतिकारिता॥
अविमृष्टविधेयांशभावः सन्दिग्धता तथा।
पदवाक्याऽऽश्रिता दोषाः पदांशेऽप्येषु केचन॥

दुःश्रवत्वं—परुषवर्णतया श्रुतिदुःखाऽऽवहत्वम्। पदगतं यथा—

बन्धुभिः सादरं नेत्रैः पीयमानेव सा मुहुः।
सुताऽऽननेन्दुपूर्णाङ्का कार्त्तार्थ्यं लभतां कदा॥२९॥

अत्र कार्त्तार्थ्यमिति श्रुतिकटुः। वाक्यगतं यथा—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्र्सीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च॥३०॥
[भट्टि०]

**टीका—बन्धुभिरिति**—सा बन्धुभिः सादरं पीयमानेव दृष्टिभिरनिमेषाभिर्दृश्यमानेव सुताननेन्दुना सुतस्य मुखशशिना पूर्णोऽङ्को यस्याः सा पूर्णोत्सङ्गा कदा कार्त्तार्थ्यं कृतार्थतां लभतां प्राप्नोतु। पथ्यावक्त्रम्॥२९॥

**स** इति—स दशरथो राजा वेदानध्यैष्ट पपाठ। त्रिदशान् देवान् अयष्ट यज्ञेन तर्पयामास। पितॄन् अग्निष्वात्तादीन् अतार्प्सीत् तृप्तान् चकार। बन्धून् सममंस्त संमानयामास, षड्वर्गं कामक्रोधलोभमोहमदमात्सर्याणामरीणां षड्वर्गं व्यजेष्ट जिगाय। नीतौ तदाख्ये शास्त्रे अरंस्त रेमे, यथानीति राज्यकार्यं चक्रे इत्यर्थः। समूलघातं मूलादुत्पाट्यारींश्च न्यवधीज्जघान। उपजातिः वृत्तम् ॥३०॥

इदन्तु बोध्यम्—

एकमात्रस्य पदस्य दुष्टत्वे पददोषः, पदानामेकाधिकानां तथात्वे वाक्यदोषः, पदानां परिवर्त्तनेऽपि दोषस्य तादवस्थ्ये अर्थदोषः इत्याहुः।

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्राऽऽदौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥" [ विश्वनाथः ]

क्रमेणोदाहरणम्—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः,
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥"

[ वेणी० ]

अत्र कुपितो वक्ता। उद्धतं वाच्यं यथा—

'संवर्त्तप्रकटविवर्त्तसप्तपाथोनाथोभिर्व्यतिकरविभ्रमप्रचण्डः।
निर्घोषः स्फुरति भृशं परःसहस्रज्यावल्गत्प्रबलगतागतास्त्रपाणाम् ॥" [वीर०]

रौद्रादिरसे तूदाहरणानि पूर्वमुक्तानि।

**भाषार्थ**—पदगत तथा वाक्यगत दोषों को गिनते हैं—दुःश्रवत्व, अनुचितार्थत्व, ग्राम्यत्व, निहतार्थता, क्लिष्टत्व, अप्रतीतत्व, विरुद्धमतिकृत्, अविमृष्टविधेयांशभाव, सन्दिग्धता। इनमें से कुछ दोष पदांशों में भी रहते हैं। दुःश्रवत्व—कठोर वर्णों के होने के कारण कानों को सुनने में खटकने वाला। पदगत जैसे—बन्धुओं से आदर के सहित बार बार देखी जाती हुई वह पुत्र के मुखचन्द्र से शोभित गोद वाली कब कार्त्तार्थ्य=सफलता प्राप्त करेगी। यहाँ पर 'कार्त्तार्थ्य' पद, जिसका कृतार्थता अर्थ है, श्रुतिकटु है। वाक्यगत जैसे—उसने ( दशरथ ने ) वेदों को पढ़ा, देवताओं को यज्ञ से तृप्त

किया, पितरों को स्वधा से तृप्त किया, बन्धुगणों का सम्मान किया, अरिषड्वर्ग को जीता, नीति में रमण किया, शत्रुओं का जड़ से सत्यानाश किया। यहां पर 'अध्यैष्ट' 'अरंस्त' इत्यादि श्रुतिकटु हैं, जो वाक्यगत हैं।

पदांशेऽप्येतत्। यथा—

'तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्' इत्यत्र 'द्ध्यै' इति पदांशं दुष्टमाहुः।

अनुचितार्थत्वं पदगतं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः ॥३१॥

अत्र पशुपदं कातर्य्यम् अभिव्यनक्तीत्यनुचितार्थम्।

वाक्यगतं तूह्यम्।

टीका—तपस्विभिरिति—या गतिस्तपस्विभिश्चान्द्रायणादिव्रतपरैः, सुचिरेण चिरकालेन लभ्यते, या च सत्रिभिर्यज्ञानुष्ठायिभिः प्रयत्नतः इष्यते काम्यते, यशस्विनः कीर्त्तिशालिनः पुरुषाः रणाश्वमेधे रणरूपेऽश्वमेधयज्ञे पशुतां पशुभावं यज्ञपशुतामश्वरूपतामिति यावत्, उपागताः प्राप्तास्तां गतिम्, आशु प्रयान्ति गच्छन्ति। स्पष्टमन्यत् ॥३१॥

भाषार्थ—पदांश में भी यह दोष (श्रुतिकटुत्व) रहता है। जैसे—'हे मदन! त्वं तत्सिद्ध्यै गच्छ देवकार्यं च कुरु—हे कामदेव! तुम जाओ, और देवों का काम पूरा करो।' यहाँ 'ध्यै' यह पदांश दुष्ट है। पदगत अनुचितार्थत्व जैसे—तपस्वी लोग जिस गति को बहुत दिनों में प्राप्त करते हैं, तथा प्रयत्नपूर्वक यज्ञ का अनुष्ठान करने वाले लोग जिसे चाहते हैं, यशस्वी लोग रणरूप अश्वमेध में यज्ञपशु बने हुए उस गति को शीघ्र प्राप्त कर लेते हैं। यहाँ पर पशुपद कातर्य=कातरता को प्रकट करता है क्योंकि पशु पराधीन होते हैं। वैसे वीर तो स्वाधीन होते हैं, पराधीन नहीं। अतः वीरों को पशु कहना अनुचित है, यही अनुचितार्थत्व है। वाक्यगत अनुचितार्थत्व का उदाहरण ढूँढ लेना चाहिये।

ग्राम्यत्वं—केवलं लोके एव स्थितत्वम्। पदगतं यथा—

'किं रुषा शोणितस्पर्द्धी गल्लस्ते स्पन्दते भृशम्'।

वाक्यगतं यथा—

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।
करोति खादनं पानं सदैव तु यथा तथा ॥३२॥

प्रथमे गल्लशब्दः, द्वितीये भल्लादयश्च शब्दाः ग्राम्याः।

निहतार्थत्वम्—उभयार्थकस्य शब्दस्य अप्रसिद्धेऽर्थे प्रयोगः।
यथा—'यमुनाशम्बरमम्बरं व्यतानीत्'।

शम्बरशब्दो दैत्यविशेषे प्रसिद्धः, इह तु जले निहतार्थः।

क्लिष्टत्वम्—अर्थप्रतीतेर्व्यवहितत्वम्। पदगतं यथा—

'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः।'

अत्र क्षीरोदजा—लक्ष्मीः, तस्या वसतिः—पद्मम्, तस्य जन्मभुवः—जलानि, इत्यतिकष्टेन बोधः।

**टीका**—ग्राम्यत्वं ग्रामीणवाक्यप्रयोगः। काव्येऽलौकिकचमत्कारिपद-प्रयोग एवोचितः, तथात्वे काव्यस्य चमत्कारित्वं हीयते। शोणितस्पर्द्धी=शोणितेन रुधिरेण स्पर्द्धते इति तच्छीलोऽतीव रक्त इत्यर्थः। पथ्यावक्त्रम्।

ताम्बूलेति—'करोति खादनं पानं सदैव तु यथा तथा' इदमस्य पद्यस्यो-त्तरार्द्धम्। ताम्बूलेन भृतं पूर्णं गल्लं यस्य स तादृशोऽयं मनुष्यो सदैव यथा खादनं भक्षणं पानं च करोति तथैव तु भल्लं सम्यक् जल्पति। अत्र गल्लभल्लमानुष-खादनपानशब्दाः ग्राम्याः। पथ्यावक्त्रम् ॥३२॥

निहतार्थत्वमिति—अयं श्लेषादौ न दोषः। ग्राम्यत्वमधमोक्तिषु गुणः। यथा अभिज्ञानशाकुन्तले—"जालु। एत्तिके दाव एदस्य आगमे, अध मां मालेध कुट्टेध वा। अत्र "मालेध" "कुट्टेध" इति पदे ग्राम्ये।

[ एत्तिके इति—"एतावांस्तावदेतस्याऽऽगमः, अथ मां मारयत कुट्टयत वा" इति संस्कृतम् ]।

क्लिष्टत्वं, विरुद्धमतिकारित्वम्, अविमृष्टविधेयांशभावश्च समासगतपददोषा एवेति वेद्यम्।

**भाषार्थ—ग्राम्यत्व का अर्थ है जो सामान्यतया जनसाधारण में ही**

( लोक में ) प्रसिद्ध हैं, अर्थात् जो चमत्कारहीन है वह ग्राम्य कहलाता है। पदगत ग्राम्यत्व जैसे—क्रोध क्यों करती हो, खून के समान लाल रंग वाला तेरा गाल मारे गुस्से के फड़क रहा है। यहाँ जो बात कही गई है, वह चमत्कारशून्य होने से ग्राम्य है। वाक्यगत ग्राम्यत्व जैसे—मुँह में भरे हुए पान से गाल को उभारे हुए यह मनुष्य स्पष्ट बोलता है तथा वैसा ही हमेशा अनाप-शनाप खाना पीना करता रहता है अर्थात् जैसे खूब खाता है वैसे ही खूब अच्छी तरह बोलता है। यहाँ पहले श्लोक में गल्ल शब्द तथा दूसरे पद्य में भल्ल आदि शब्द ग्राम्य हैं। निहतार्थत्व—जिस शब्द के दो अर्थ और उन अर्थों में से अप्रसिद्ध अर्थ में उसका प्रयोग किया जावे। जैसे—यमुना का शम्बर (जल) आकाश में छा गया है। यहाँ पर आकाश के नीले रंग को देखकर यह उत्प्रेक्षा है कि मानो यमुनाजल आकाश में फैल गया हो। शम्बर शब्द दैत्यविशेष में प्रसिद्ध है, यहाँ जल अर्थ में निहतार्थ है। क्लिष्टत्व—जिसका अर्थ समझने में देरी लगे। पदगत क्लिष्टत्व का यह उदाहरण है, जैसे—( शरद् ऋतु ) में जल स्वच्छ हो गया है, यह कहना है तो इसके लिये द्राविड प्राणायाम करके यह कहना कि क्षीरोद सागर से उत्पन्न हुई जो लक्ष्मी जी, उनकी वसति—निवासस्थान स्वरूप जो कमल, उनकी उत्पत्ति के स्थान ( जल ) स्वच्छ हो गये हैं। यहाँ—क्षीरोदजा= लक्ष्मी, उसकी वसति=निवासस्थान ( पद्म ), उसके जन्मस्थान=जल। यहाँ जल का बोध अति कष्ट से होता है।

वाक्यगतं यथा—

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥३३॥

अत्र धम्मिल्लस्य—केशबन्धस्य, शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः।

अप्रतीतत्वम्—एकदेश(शास्त्रान्तर)मात्रप्रसिद्धत्वम्। यथा— "योगेन दलिताऽऽशयः"।

अत्र आशयशब्दो वासनाऽर्थो योगशास्त्र एव प्रसिद्धः। विरुद्धमतिकारिता यथा—

उदारचरितो धीमान् सर्वलोकप्रियङ्करः।
अकार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ? ॥३४॥

अत्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्रमिति विरुद्धा प्रतीतिः।

**टीका**—वाक्यगतं क्लिष्टत्वमुदाहरति—**धम्मिल्लस्येति** । अपूर्वा पूर्वमदृष्टाऽश्रुता च बन्धस्य ग्रथनस्य व्युत्पत्तिर्ज्ञानं यस्यास्तस्याः कुरङ्गशावाक्ष्याः हरिणलोचनाया धम्मिल्लस्य संयतकेशकलापस्य शोभां सौन्दर्यं प्रेक्ष्य वीक्ष्य कस्य पुंसो मानसं चित्तं निकाममत्यन्तं न रज्यति नानुरागं वहति। अत्र सर्वोऽपि कबरीं दृष्ट्वा मुह्यतीत्यर्थः। आर्या वृत्तम् ॥३३॥

एकदेशेति—एकस्मिन् देशे क्वचिद्देशे शास्त्रान्तरे शास्त्रविशेषे एव वा प्रसिद्धत्वं विख्यातत्वम् अप्रतीतत्वं भवति। अत्रेदं बोध्यम्। मूले एकदेशपदस्यैव व्याख्या शास्त्रान्तरेति। अत्र च दर्पणः प्रमाणम्—

"गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः"। [ विश्वनाथः ]

यथा—"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥" [ कुमारस० ]
अत्र वक्तृवाच्ययोस्तदर्थबोधान्न दोषः।

**उदारेति**—असौ एकः उदारचरितः उदात्ताचारः धीमान् बुद्धिमान् सर्वेषां लोकानां मनुष्याणां प्रियङ्करः प्रियकर्ता च वर्तते तस्य विषये किं वर्णयामहे ब्रूमहे, अयमकार्यमित्रं निष्प्रयोजनं सुहृद् वर्तते इत्यर्थः। पथ्यावक्त्रम् ॥ स्पष्टमन्यत् ॥३४॥

**भावार्थ**—वाक्यगत क्लिष्टता का उदाहरण दिखाते हैं—अदृष्टपूर्व तथा अश्रुतपूर्व है केशबन्धन की व्युत्पत्ति जिसकी ऐसी इस हरिणशावाक्षी के केशकलाप की शोभा को देखकर कौन ऐसा वीर है जिसका चित्त चलायमान नहीं हो जाता। प्रत्येक पुरुष इसके बालों में उलझ जाता है। यहाँ "धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यति" यह सम्बन्ध क्लिष्ट है। अतः वाक्यगत क्लिष्टत्व है। अप्रतीतत्व का अर्थ है किसी देशविशेष में ही जो शब्द या अर्थ प्रसिद्ध हो अथवा शास्त्र का जो पारिभाषिक शब्द हो, उसका प्रयोग करना। जैसे—यह योगी योग से आशय=वासनाओं या कर्मों को नष्ट कर चुका है। यहाँ 'आशेरते चेतसि इति आशयाः वासना कर्माणि वा' इस व्युत्पत्ति से आशय शब्द का वासना रूप अर्थ योगशास्त्र में ही प्रसिद्ध है। विरुद्धमतिकारिता, जैसे—यह एक ही मनुष्य उदारचेता, बुद्धिमान्, सब मनुष्यों का प्रियकारी तथा बिना मतलब का दोस्त है। इसके

गुणों का क्या वर्णन करें, इसके गुण वर्णनातीत हैं। यहाँ 'अकार्यमित्र' शब्द में अकार्य=दुष्ट कर्मों में मित्र, यह अर्थ भी प्रतीत हो जाता है पर यह अर्थ विवक्षित नहीं है। अतः यह वाक्य विरुद्धमति (बुद्धि) का पैदा करने वाला है।

अविमृष्टः—प्राधान्येनानिर्दिष्टः, विधेयांशो यत्र तस्य भावः अविमृष्टविधेयांशभावः; अयं विधेयाविमर्श इति च कथ्यते। यथा—

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु।
वरेषु यत् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने?॥३५॥ [ कुमारस॰ ]

अत्र अलक्ष्यं विधेयं, तस्य च समासे गुणीभावादप्राधान्येन निर्देशः। यथा वा—

"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा"।

अत्र नञो विधेयत्वमेवोचितम्। यथा निम्ने श्लोके—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराऽऽकृष्टं, न तस्य शराऽऽसनम्।
अयमपि पटुर्धाराऽऽसारः, न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी॥३६॥
[ विक्रमो॰ ]

जुगोपाऽऽत्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्॥३७॥ [रघुवंशम्]

इत्यत्र तु अत्रस्तताऽऽद्यनुवादेनाऽऽत्मगोपनाऽऽद्येव विधेयमिति न दोषः।

वाक्यगतो यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो! रावणः।
धिक्! धिक्! शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः?॥३८॥
[ महाना॰ ]

**टीका—वपुरि**ति—पार्वतीं प्रति वटुवेषधारिणो महादेवस्योक्तिरियम् । हे मृगाक्षि ! मृगशावकनयने ! वपुः शरीरं, शम्भोरिति शेषः, विरूपाणि विषमाणि, अक्षीणि यस्य तत्, विरूपाक्षं नेत्रत्रययुक्तमिति भावः, अलक्ष्यम् अज्ञातम्, जन्म यस्य स तथोक्तः, तस्य भावः अलक्ष्यजन्मता अकुलीनत्वमिति भावः ['अलक्षिता जनिः' इति ( निर्दुष्टे ) पाठे जनिः उत्पत्तिः, अलक्षिता अज्ञाता, "जनिरुत्पत्तिरुद्भवः" इत्यमरः], तथा दिगम्बरत्वेन नग्नत्वेन, वसु धनं, निवेदितं सूचितम्; यस्य धनमस्ति, स कदाऽपि न नग्नास्तिष्ठति, अस्य तु तदभावात् दिगम्बरत्वमिति भावः । ( अतः ) वरेषु उपयन्तृषु, यत् रूपाऽऽदिकमित्यर्थः ( तदुक्तम्—"कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥" इति ) मृग्यते कन्यातद्बन्धुभिः अन्विष्यते, त्रिलोचने हरे, तत् व्यस्तमपि एकमपीत्यर्थः, समस्तं दूरापास्तमिति भावः, किम् अस्ति ? नैवेत्यर्थः । वंशस्थविलं वृत्तम् ॥३५॥

**अमुक्ते**ति—हे नाथ ! भवता सा नायिका पुरा मुहूर्तमपि क्षणमपि अमुक्ता अत्यक्ता । अत्र नञः समासो नोचितः ।

**नवे**ति—उर्वशी विरहिणः पुरूरवस उक्तिरियम्—अयं नवजलधरः नूतनो नीरदः सन्नद्धः आकाशेऽभ्युदितः, दृप्तो गर्ववान्निशाचरो राक्षसो न । इदं दूराकृष्टं दूरादाकृष्टं दूराकृष्टं कर्णान्ताकृष्टं सुरधनुर्देवेन्द्रस्य धनुर्वर्तते, तस्य निशाचरस्य शरासनं धनुर्नास्ति । अयं च पटुस्तीव्रो धारासारः वर्षाधाराणां सम्पातो वर्तते, तस्य रक्षसो बाणस्य परम्परा पङ्क्तिर्नास्ति । कनकस्य सुवर्णस्य निकषो घर्षणरेखा तद्वत् स्निग्धा विद्युत् तडिद् वर्तते मम प्रिया उर्वशी नास्ति किम् । अत्र च पुरूरवा वितर्कयते स्वयमेव चोत्तरयति इत्यर्थः । हरिणीवृत्तम् ॥३६॥

**जुगोपे**ति—स राजा दिलीपोऽत्रस्तो भीतः सन् आत्मानं जुगोप ररक्ष । अनातुरः सन् व्याध्याद्यपीडितः सन् धर्मं भेजे चचार । अगृध्नुरलुब्धः सन्नर्थान् आददे स्वीचक्रे । असक्तः अप्रसितः सन् सुखमन्वभूत् अनुबभूवेत्यर्थः । अत्र विधेयाविमर्शदोषो नास्ति ॥३७॥

वाक्यगताऽविमृष्टविधेयांशभावमुदाहरति—**न्यक्कार** इति । हनुमन्नाटके राक्षसक्षयं कुर्वाणं राममभिलक्ष्येयमुक्तिः स्ववीरभर्त्सनाय । अयमेव मे न्यक्कारः तिरस्कारो यदरयः शत्रवः सन्ति—इन्द्रादिदेवानां कारागारे प्रक्षेप्तुर्मम शत्रूणां

सत्ता जीवितत्वं च मूर्तिमाँस्तिरस्कारो ममेत्यर्थः। मे ममेन्द्रजेतुरिति भावः। अरय इति बहुवचनं भूयोऽपि शत्रुबाहुल्यमपरस्तिरस्कार इति सूचयितुम्। तत्रापि असौ तापसः सेनाशस्त्रादिरहितस्तपस्वी सम्राजो मम प्रतिपक्षीति तिरस्कारान्तरम्। भवतु शत्रुसत्ता न मम किञ्चिद्धीयते तत्राह—सोऽप्यत्रैव राक्षसानां मज्जातीयानां कुलं नैकं द्वौ वा निहन्ति मारयति। एतत्सर्वमत्याहितमाकर्ण्यापि रावणो जीवति, यस्य नाम्नैव शत्रवः पलायन्ते स्म। शक्रजितं मेघनादं धिक्! पुनरपि धिक्! प्रबोधितवता जागरितेन कुम्भकर्णेन किम्? किं प्रयोजनम्? व्यर्थमेव स जीवति। स्वर्गाख्यग्रामटिका तस्या विलुण्ठने नाशने वृथा व्यर्थमेव उच्छूनैः स्थूलै-रेभिर्भुजैर्बाहुभिः किम्? किम्प्रयोजनमित्यर्थः। अत्र न्यक्कारस्य उद्देश्यकीर्तनानन्तरं विधानं युक्तमासीत्। एवमेव वैयर्थ्यमपि समासे गुणीभूतमिति विधेयाविमर्शदोषः। शार्दूलविक्रीडितं छन्दः ॥३८॥

**भाषार्थ**—अविमृष्ट=प्रधान रूप से अनिर्दिष्ट है उद्देश्य विधेयभाव जिसका, ऐसा अविमृष्टविधेयांश दोष है। इसका ही दूसरा नाम विधेयाविमर्श भी है। जैसे—वपुरिति—शरीर में तीन आँखें हैं। माँ-बाप का ठिकाना नहीं। तन नंग-धड़ङ्ग है। पास कानी कौड़ी नहीं। हे बाल मृग के समान नेत्रवाली! वरों में जो रूप, खानदान, पैसा आदि तीन वस्तुएँ देखी जाती हैं, इनमें से कोई एक भी महादेव में है?। यहाँ 'अलक्ष्यजन्मता' पद में अलक्ष्य-शब्दार्थ विधेय है, जो कि समास में गुणीभूत होने से अप्रधान रूप में निर्दिष्ट है। अथवा—हे नाथ आपने उसे (स्त्री को) एक क्षण को भी कभी अलग नहीं किया। यहां 'अमुक्ता' पद में नञ् की विधेयता समास में नष्ट हो गई है। किन्तु यहां नञर्थ विधेय ही चाहिए था, जैसा कि निम्नलिखित उदाहरणों में है—उर्वशी के विरह में पुरूरवा कहता है कि यह कोई नया बादल उमड़ रहा है, कोई राक्षस तो नहीं है। यह इन्द्रधनुष है, राक्षस का धनुष नहीं। यह तीव्र मेघजल की धारा है, राक्षस के बाणों की वर्षा नहीं। तथा यह बिजली की रेखा है, मेरी प्यारी उर्वशी नहीं?। तथा—वह राजा दिलीप बिना डर के भी अपनी रक्षा करता था। बिना व्याधि के भी धर्म का आचरण करता था। बिना लोभ के धनसञ्चय करता था। बिना आसक्ति के सुख भोगता था। यहां पर भी नञ् गुणीभूत नहीं है क्योंकि यहां 'अत्रस्तस्व' का अनुवाद करके आत्मगोपनादि का विधान है। अतः

यहां पर विधेयाविमर्श दोष नहीं है। वाक्यगत विधेयाविमर्श का उदाहरण दिखाते हैं—न्यक्कार इति। मेरा सब से अधिक तिरस्कार यही है जो कि मेरे शत्रु हैं तथा उनमें भी कोई राजा होता तौ भी बात थी। एक तपस्वी मेरा शत्रु है। वह भी मेरे राज्य ( लङ्का ) में राक्षसकुल का विध्वंस कर रहा है। रावण के जीते जी यह सब अनर्थ हो रहा है। इन्द्रजित् ( मेघनाद ) को सौ बार धिक्कार है। कुम्भकर्ण के भी जागने से क्या लाभ है ? स्वर्गरूपी छोटे गाँव को लूटने में सिद्धहस्त मेरी इन वृथा पुष्ट भुजाओं से भी क्या प्रयोजन है ? निरर्थक हैं।

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इत्युक्तेरुद्देश्यस्य प्रथमं, ततो विधेयस्य निर्देशो युक्तः। अत्र न्यक्कारस्य विधेयत्वे विवक्षितेऽपि प्रथमं निर्देशात् न तथा प्रतीतिः। रचना च पदद्वयस्य विपरीतेति वाक्यदोषः। यथा वा—

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः"।

अत्र "असौ" इत्यस्य विधेयत्वमेव भवितुं युक्तः, तच्च यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्।

सन्दिग्धत्वं यथा—

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु"।

अत्र वन्द्यामिति वन्दीभूतायाम्, उत वन्दनीयायामिति सन्देहः।

**टीका**—अनुवाद्यम्=उद्देश्यम्। आनन्दयतीति—हे सुभ्रु ! योऽसौ समागतः स ते नेत्रे आनन्दयति किम् ? इत्यन्वयः। अत्र हे सुभ्रु ! इति प्रयोगे—भ्रूशब्दस्योवङ्स्थानीयतया 'नेयङुवङ्स्थानावस्त्री' ( १।४।४ पा० ) इति नदीसंज्ञाप्रतिषेधे 'अम्बाऽर्थनद्योर्ह्रस्वः' ( ७।३।१०७ पा० ) इति ह्रस्वत्वाभावात् प्रामादिकोऽयं प्रयोगः इत्येके; अन्ये तु—"अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्" इति वार्त्तिके "अलाबूः" "कर्कन्धूः" इत्याद्यूकारान्तादूङ्मुदाजहार महाभाष्यकारः, इत्यस्याप्यूङन्तत्वात् नदीत्वे ह्रस्वत्वम्।

**आशी**रिति—वन्द्यां दास्यां आशीःपरम्परां कृत्वा इत्यर्थः। उत वन्द्यां वन्दनीयामाशीःपरम्परां कर्णे कृत्वा कृपां कुरु इत्यर्थः—इति सन्देहः।

"सन्दिग्धत्वं गुणो व्याजस्तुतिपर्य्यवसायि चेत् ।" [ विश्वनाथः ]

व्याजस्तुतिश्च अलङ्कारप्रस्तावे वक्ष्यमाणा । यथा—

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥"

भाषार्थ—'अनुवाद्य को बिना कहे विधेय को न कहे' यह नियम है । तदनुसार उक्त 'न्यक्कारः' इत्यादि उदाहरण में उद्देश्य का पहले निर्देश युक्त है, बाद में विधेय का । पर यहाँ उलटी ही माया है । यहाँ न्यक्कार के विधेय होने पर भी उसकी विधेयतया प्रतीति नहीं होती क्योंकि वह प्रथम निर्दिष्ट है । क्योंकि दोनों पदों की रचना में पौर्वापर्य का विपर्यय है । अतः यहाँ पददोष है । अथवा—हे ! अच्छे भौंहों वाली ! यह जो ( काक ) या ( उपनायक ) आया है, यह तेरे नेत्रों को प्रसन्न करता है । यहाँ 'असौ' पद की विधेयता ही होनी चाहिए पर यत् शब्द के पास रक्खा 'अदस्' शब्द का 'असौ' पद उद्देश्य सा बन गया है । 'जो आया है वह' यह अर्थ विधेयता पक्ष में होना चाहिये । परन्तु 'यह जो आया है' ऐसा उद्देश्यता पक्ष का अर्थ हो रहा है, यही दोष है । संदिग्धत्व जैसे—हे राजन् ! इस दासी पर आशीर्वादों को देकर इसके या सुनने वालों के कानों पर कृपा कीजिए । 'कर्ण' यह जात्येकवचन या पुरुषविशेष की संज्ञा समझिए । यहाँ पर 'वन्द्याम्' यह पद संदिग्ध है । 'बन्दी' शब्द की सप्तमी में भी यह रूप बन सकता है, तथा 'वन्दनीय' यह भी इसका अर्थ हो सकता है । इस पद्य का पूर्वार्ध यों है—'आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया' । अतः इसका अर्थ यही होता है कि युद्ध में विजय को प्राप्त कर विजित शत्रुओं से शुभ आशीर्वादों को सुनकर शत्रुओं पर कृपा कीजिए, उन्हें क्षमा कीजिए ।

वाक्यमात्रगतान् दोषानाह—

**'वर्णानां प्रतिकूलत्वं सन्धौ विश्लेषकष्टते ।
अधिकन्यूनकथितपदताऽक्रमता तथा ॥
भग्नप्रक्रमता ख्याति-हतता सङ्करोऽपि च ।
गर्भितत्वं तथा काव्ये दोषाः स्युर्वाक्यमात्रगाः ॥'**

यहां पर विधेयाविमर्श दोष नहीं है। वाक्यगत विधेयाविमर्श का उदाहरण दिखाते हैं—न्यक्कार इति। मेरा सब से अधिक तिरस्कार यही है जो कि मेरे शत्रु हैं तथा उनमें भी कोई राजा होता तौ भी बात थी। एक तपस्वी मेरा शत्रु है। वह भी मेरे राज्य (लङ्का) में राक्षसकुल का विध्वंस कर रहा है। रावण के जीते जी यह सब अनर्थ हो रहा है। इन्द्रजित् (मेघनाद) को सौ बार धिक्कार है। कुम्भकर्ण के भी जागने से क्या लाभ है? स्वर्गरूपी छोटे गाँव को लूटने में सिद्धहस्त मेरी इन वृथा पुष्ट भुजाओं से भी क्या प्रयोजन है? निरर्थक हैं।

**"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इत्युक्तेरुद्देश्यस्य प्रथमं, ततो विधेयस्य निर्देशो युक्तः। अत्र न्यक्कारस्य विधेयत्वे विवक्षितेऽपि प्रथमं निर्देशात् न तथा प्रतीतिः। रचना च पद-द्वयस्य विपरीतेति वाक्यदोषः। यथा वा—**

**"आनन्दयति ते नेत्रे योऽसौ सुभ्रु! समागतः"।**

**अत्र "असौ" इत्यस्य विधेयत्वमेव भवितुं युक्तः, तच्च यच्छ-ब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्।**

**सन्दिग्धत्वं यथा—**

**"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु"।**

**अत्र वन्द्यामिति वन्दीभूतायाम्, उत वन्दनीयायामिति सन्देहः।**

**टीका**—अनुवाद्यम्=उद्देश्यम्। आनन्दयतीति—हे सुभ्रु! योऽसौ समागतः स ते नेत्रे आनन्दयति किम्? इत्यन्वयः। अत्र हे सुभ्रु! इति प्रयोगे—भ्रूशब्दस्यो-वङ्स्थानीयतया 'नेयङुवङ्स्थानावस्त्री' (१।४।४ पा०) इति नदीसंज्ञाप्रतिषेधे 'अम्बाऽर्थनद्योर्ह्रस्वः' (७।३।१०७ पा०) इति ह्रस्वत्वाभावात् प्रामादिकोऽयं प्रयोगः इत्येके; अन्ये तु—"अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्" इति वार्त्तिके "अलाबूः" "कर्कन्धूः" इत्याद्यूकारान्तादूङमुदाजहार महाभाष्यकारः, इत्यस्याप्यू-ङन्तत्वात् नदीत्वे ह्रस्वत्वम्।

**आशी**रिति—वन्द्यां दास्यां आशीःपरम्परां कृत्वा इत्यर्थः। उत वन्द्यां वन्दनीयामाशीःपरम्परां कर्णे कृत्वा कृपां कुरु इत्यर्थः—इति सन्देहः।

"सन्दिग्धत्वं गुणो व्याजस्तुतिपर्य्यवसायि चेत्।" [ विश्वनाथः ]

व्याजस्तुतिश्च अलङ्कारप्रस्तावे वक्ष्यमाणा । यथा—

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥"

भावार्थ—'अनुवाद्य को बिना कहे विधेय को न कहे' यह नियम है। तदनुसार उक्त 'न्यक्कारः' इत्यादि उदाहरण में उद्देश्य का पहले निर्देश युक्त है, बाद में विधेय का। पर यहाँ उलटी ही माया है। यहाँ न्यक्कार के विधेय होने पर भी उसकी विधेयतया प्रतीति नहीं होती क्योंकि वह प्रथम निर्दिष्ट है। क्योंकि दोनों पदों की रचना में पौर्वापर्य का विपर्यय है। अतः यहाँ पददोष है। अथवा—हे ! अच्छे भौंहों वाली ! यह जो (काक) या (उपनायक) आया है, यह तेरे नेत्रों को प्रसन्न करता है। यहाँ 'असौ' पद की विधेयता ही होनी चाहिए पर यत् शब्द के पास रक्खा 'अदस्' शब्द का 'असौ' पद उद्देश्य सा बन गया है। 'जो आया है वह' यह अर्थ विधेयता पक्ष में होना चाहिये। परन्तु 'यह जो आया है' ऐसा उद्देश्यता पक्ष का अर्थ हो रहा है, यही दोष है। संदिग्धत्व जैसे—हे राजन् ! इस दासी पर आशीर्वादों को देकर इसके या सुनने वालों के कानों पर कृपा कीजिए। 'कर्णं' यह जात्येकवचन या पुरुषविशेष की संज्ञा समझिए। यहाँ पर 'वन्द्याम्' यह पद संदिग्ध है। 'बन्दी' शब्द की सप्तमी में भी यह रूप बन सकता है, तथा 'वन्दनीय' यह भी इसका अर्थ हो सकता है। इस पद्य का पूर्वार्ध यों है—'आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया'। अतः इसका अर्थ यही होता है कि युद्ध में विजय को प्राप्त कर विजित शत्रुओं से शुभ आशीर्वादों को सुनकर शत्रुओं पर कृपा कीजिए, उन्हें क्षमा कीजिए।

वाक्यमात्रगतान् दोषानाह—

'वर्णानां प्रतिकूलत्वं सन्धौ विश्लेषकष्टते ।
अधिकन्यूनकथितपदताऽक्रमता तथा ॥
भग्नप्रक्रमता ख्याति-हतता सङ्करोऽपि च ।
गर्भितत्वं तथा काव्ये दोषाः स्युर्वाक्यमात्रगाः ॥'

वर्णानां रसानुगुणत्वं वक्ष्यते, तद्वैपरीत्यं प्रतिकूलत्वम् । यथा—"कृतमनुमतम्" ( ३४ पृ० ) इत्यादि पूर्वमुक्तम् । अत्र हि गाढबन्धत्वं दीर्घसमासत्वञ्च उचितम् । तद्वैपरीत्यकरणात् दोषः ।

सन्धौ विश्लेषः द्विविधः—व्याकरणलक्षणानुसारेण कृतः, अनुशासनमुल्लङ्घ्य स्वेच्छया कृतश्च । पूर्वः असकृदेव दोषः, द्वितीयस्तु सकृदपि ।

आद्यो यथा—

"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते" ।

द्वितीयो यथा—

"वासवाऽऽशामुखे भाति इन्दुश्चन्दनबिन्दुवत्" ।

सन्धौ कष्टता—श्रुतिदुःखाऽऽवहत्वम् । यथा—

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥३६॥

**टीका**—वर्णानामिति—अधिकपदता, न्यूनपदता, कथितपदता—इत्येवमन्वयं कृत्वार्थः कार्यः । **वासवेति**—इन्दुश्चन्द्रमा वासवस्येन्द्रस्याशाया दिशाया मुखे चन्दनबिन्दुवद् भाति प्रकाशते इत्यर्थः । **उर्वीति**—अत्रास्मिन् स्थाने असौ तरूणामाली पंक्तिः उर्वी महती तथा, मरूणां मरुदेशानामन्तेऽवसाने मध्ये वा उर्वी महती, चार्वी अवस्थितिर्यस्याः सा तादृशी च वर्तते । अतः सुन्दरि ! मनाक् किञ्चिच्छिरो नमय नीचैः कुरु यतोऽत्र ऋजु यथा स्यात्तथा शिरो नमनं विनेति यावद् गन्तुं न युज्यते न शक्यते इत्यर्थः ॥३६॥

**भाषार्थ**—वाक्यमात्रगत दोषों को गिनते हैं—प्रतिकूलवर्णत्व ( रस के अनुकूल न होना ) सन्धिविश्लिष्टता, सन्धिकष्टता, अधिकपदता, न्यूनपदता, कथितपदता, अक्रमता, भग्नप्रक्रमता, ख्यातिहतता, सङ्कर, गर्भितत्व यह दोष केवल वाक्यों में रहते हैं । वर्णों की रसानुकूलता कहेंगे—उसके अनुकूल न होना ही प्रतिकूलता है । जैसे—'कृतमनुमतम्' इत्यादि पद्य । यहाँ पर वीर रस में कठोर वर्ण ( गाढबन्ध ) लम्बा समास होना चाहिये था । उसके विपरीत करना ही दोष है । सन्धि में विश्लेष दो प्रकार का होता है—व्याकरण शास्त्र के अनुकूल या प्रतिकूल । पहले पक्ष में बार बार सन्धि

करना दोष है। दूसरे कल्प में एक बार भी वैसा करना दोष है। प्रथम (व्याकरणानुकूल सन्धिविश्लेष) का उदाहरण—'दलिते०' इत्यादि। यहाँ पर सब जगह "ईदूदेद्द्विवचनं प्रगृह्यम्" इस सूत्र से प्रगृह्य संज्ञा होने पर प्रकृतिभाव किया गया है। द्वितीय सन्धिविश्लेष का उदाहरण—वास-वाशेत्यादि। यहाँ 'भाति इन्दुः' इस पद्यांश में दीर्घसन्धि करना ही दोष है। सन्धिकष्टता—जैसे—'उर्व्यसौ' इत्यादि पद्य में यण् सन्धि कानों को कष्ट देने वाली बार बार की गई है।

अधिकपदता यथा—"सदाशिवं नौमि पिनाकपाणिम्" इत्यत्र "पिनाकपाणिम्' इति विशेषणमधिकम्।

"कुर्यां हरस्यापि पिनाकपाणेः" इत्यत्र तु अतिदुष्प्रधृष्यत्व-सूचनाय "पिनाकपाणेः" इति विशेषणं युक्तमेव।

न्यूनपदता यथा—"तथाभूतां दृष्ट्वा" (२३ पृ०) इत्यादौ पूर्वमुक्ते। अत्र "अस्माभिः" इति, "खिन्ने" इत्यस्मात् पूर्वम् "इत्थम्" इति च पदं न्यूनम्।

टीका—अधिकपदतेत्यादि। इदं सर्वं स्पष्टम्। कुर्यामिति—अस्य "धैर्यच्युतिं के मम धन्विनोऽन्ये" इत्युत्तरार्द्धम्।

इदन्तु ध्येयम्—

"गुणः क्वाप्यधिकं पदम्" यथा—

"आचरति दुर्जनो यत् सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम्॥"

अत्र "न न जाने" इत्ययोगव्यवच्छेदकम्; द्वितीयं "जाने" इति अन्य-योगव्यवच्छेदकम् (च) इति वैचित्र्यातिशयः।

"सम्भ्रमे विस्मये हर्षे विषादेऽप्यधिकं पदम्।" गुण एव। सम्भ्रमे यथा—

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्॥" [रघु०]

विस्मये हर्षे च यथा—

"दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं,
चित्रं! चित्रं! किमिति! किमिति! व्याहरन् निष्पपात।

नास्मिन् गन्धो न च मधुकणा नास्ति तत् सौकुमार्य्यं,
घूर्णन् मूर्ध्ना बत ! नतशिरा व्रीडया निर्जगाम ॥" [ भ्रमरा० ]

विषादे यथा—

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा ! हन्त ! हन्त ! नलिनीं गज उज्जहार ॥" [ भ्रमराष्टकम् ]

"उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।"

**भाषार्थ**—अधिकपदता जैसे—सदाशिवमित्यादि । यहाँ 'पिनाकपाणिम्' यह विशेषण किसी अर्थविशेष का पोषक नहीं है अतः व्यर्थ है । किन्तु 'कुर्याम्' इत्यादि पद्य में पिनाकपाणि विशेषण शिवजी के अति दुष्प्रधृष्यत्व 'अति काठिनता से काबू में आने के योग्य, बड़ी कठिनाई से हराने योग्य' इस अर्थ का सूचन करने से सार्थक है । अतः यहां विशेषण देना ठीक ही है । न्यूनपदता जैसे—'तथाभूतां दृष्ट्वा' इत्यादि २३ पृष्ठ पर पूर्वोक्त पद्य में 'अस्माभिः' यह, और 'खिन्ने' इससे पूर्व 'इत्थम्' यह पद न्यून है ।

**कथितपदत्वं यथा—**

**प्रियं चेत् भरतस्यैतत् रामप्रवाजनं भवेत् ।**
**मास्म मे भरतः कार्षीत् प्रेतकृत्यं कदाचन ॥४०॥** [ रामायणे ]

**अत्र भरत इति पुनः कथितं, सर्वनाम्नैव अस्य परामर्शो युक्तः । "मास्म मेऽसौ सुतः" इत्यदुष्टम् ।**

**अक्रमत्वम्—अविद्यमानः क्रमः—पदस्थितिक्रमो यत्र तत् अक्रमम्, तस्य भावः । यथा—**

**द्वयं गतं सम्प्रति शोचनीयतां**
**समागमप्रार्थनया पिनाकिनः ।**
**कला च सा कान्तिमती कलावत-**
**स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥४१॥** [ कुमारस० ]

**अत्र "त्वम्" इत्यनन्तरं चकारो युक्तः ।**

भग्नप्रक्रमता—भग्नः प्रक्रमः—उद्देशानुगुणः प्रस्तावो यस्मिन् तत् भग्नप्रक्रमम्, तस्य भावः। यथा—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः ॥४२॥
[ किरातार्जु० ]

अत्र "सुखलिप्सया वा" इत्यत्र "सुखमीहितुं वा" इति तुमन्तप्रयोग एव युक्तः।

ख्यातिहतता—प्रसिद्धित्यागः। मेघाऽऽदीनां गर्जिताद्येव प्रसिद्धम्, तदन्यथावर्णने ख्यातिहतत्वम्।

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्करः। यथा—

किमिति न पश्यसि ? कोपं पादगतं बहुगुणमाद्रियस्वैनम्।
ननु मुञ्च हृदयनाथं सदयं मनसस्तमोरूपम् ॥४३॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि ? एनं सदयमाद्रियस्व, मनसस्तमोरूपं कोपं मुञ्चेत्यन्वयः। एकवाक्यगतत्वे तु क्लिष्टत्वमित्यस्माद्भेदः।

वाक्यान्तरे वाक्यान्तरप्रवेशो गर्भितत्वम्। यथा—

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
कर्त्तव्यः साधुसंसर्गो न विधेया कदाचन ॥४४॥

अत्र तृतीयपादवाक्यं वाक्यान्तरमध्ये प्रविष्टम्।

**टीका—प्रियमिति**—दशरथः शपति कैकेयीं बोधयन्—चेत् यदि रामस्य प्रव्राजनं वनप्रेषणं भरतस्य प्रियमभिमतं स्यात्तर्हि मृतस्य मे भरतः कदाचन कदाचिदपि प्रेतकृत्यमौर्ध्वदेहिकं कर्म मास्म कार्षीत् न विदधात्वित्यर्थः। अनुष्टुप् ॥४०॥

**टीका—द्वयमिति**—वटुवेषस्य महादेवस्य पार्वतीं प्रत्युक्तिरियम्—सम्प्रति द्वयं शोचनीयतां शोच्यतां चिन्तनीयतां गतं प्राप्तम्। कुतस्तत्र हेतुमाह—पिनाकिनः शिवस्य समागमप्रार्थनया शिवेन सह संगन्तुमिच्छया। किं किमित्याह—सा कलावतश्चन्द्रमसः कान्तिमती कला षोडशो भागः, अस्य लोकस्य च नेत्रयोः कौमुदीव कौमुदी ज्योत्स्नारूपा त्वं चेत्यर्थः। वंशस्थविलं वृत्तम् ॥४१॥

**यश इति**—यशः कीर्तिमधिगन्तुं प्राप्तुम्, सुखस्य लिप्सया प्रेप्सया वा,

मनुष्याणां संख्यामतिवर्तितुम् अतिक्रमितुं वा, मनुष्यातिगं कर्म कर्तुमित्यर्थः, निरुत्सुकानामौत्सुक्यरहितानाम्, अभियोगभाजामभियोगमुद्योगं भजतां मनुष्याणाम्, अङ्कं लक्ष्मीः समुत्सुकेवोपैति प्राप्नोतीत्यर्थः । उपजातिवृत्तम् ॥४२॥

**किमि**ति—त्वं किमिति कस्माद्धेतोः पादगतं पादयोः पतितं बहुगुणं गुणगणशालिनं हृदयनाथं न पश्यसि न विलोकयसे । मनसश्चेतसस्तमोरूपं कोपं क्रोधं मुञ्च परित्यज, एनं पादपतितं पतिं च सदयं दयासहितमाद्रियस्वादरेण सभाजयेत्यर्थः । आर्या छन्दः ॥४३॥

**परे**ति—परेषामपकारे निरतैस्तत्परैर्दुर्जनैः सह सङ्गतिः कदाचन कदाचिदपि न विधेया न कार्या । साधुभिः सह संसर्गः प्रेमा च कर्तव्यो विधेय इत्यर्थः । अनुष्टुप् छन्दः ॥४४॥

अत्रेदमवधेयम् । गर्भितत्वं क्वचिद् गुणः । यथा—

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमः
यस्मात् प्रादुरभूत् कथाऽद्भुतमिदं यत्रैव चास्तं गतम् ॥'

अत्र "वदन्त एव हि" इत्यादिवाक्यं वाक्यान्तरमध्ये प्रविष्टं चमत्कारातिशयं पुष्णाति । **दिङ्मातङ्गे**ति—सर्व्वां पृथिवीं जित्वा विप्रसात् कृतवन्तं परशुरामं दृष्ट्वा जनानामुक्तिरियम् । दिङ्मातङ्गानां दिग्गजानाम्, घटाभिः समूहैः, चतुष्टयैरिति भावः, विभक्ताः विभज्य गृहीताः, चत्वारः आघाटाः सीमानः यस्याः तादृशी, मही पृथ्वी, साध्यते उपार्ज्यते, महामहिमशालिभिरिति शेषः, सा मही, सिद्धाऽपि स्ववशीकृताऽपीत्यर्थः, विप्राय कश्यपाय इत्यर्थः, प्रतिपाद्यते समर्प्यते, वदन्त एव कथयन्त एव, हि वयं रोमाञ्चिताः सञ्जातरोमहर्षाः, जाता इति शेषः । पश्यत अवलोकयत, अपरम् अन्यत्, किं वक्तव्यमिति शेषः, यस्मात् रामात्, इदं समस्तायाः पृथिव्याः सम्प्रदातृत्वरूपम्, कथाऽद्भुतम् अद्भुतकथेत्यर्थः, प्रादुरभूत् जाता, यत्रैव च रामे, अस्तं गतम्, तथा च, तत्तुल्यो न भूतो न वर्त्तमानो न वा भविष्यन्निति भावः, तस्मै रामाय परशुरामाय, नमः । भट्टप्रभाकरस्येदं पद्यम् । शार्दूलविक्रीडितं वृत्तम् ।

**भाषार्थ**—राजा दशरथ कहते हैं यदि भरत को राम का वन

गमन प्रिय हो तो वह मेरा प्रेतकृत्य न करे। यहाँ पर 'भरतस्य' कहकर फिर 'भरतः' लिखा है, जो दुबारा लिखना अनुचित है तथा सर्वनाम शब्द का ही उसकी जगह प्रयोग उचित था—"मास्म मेऽसौ सुतः" रूप में। अक्रमत्व—जिसका क्रम विद्यमान न हो अर्थात् पदस्थापन का क्रम उलट पुलट कर दिया गया हो। जैसे—'द्वयं गतम्' इस पद्य में अन्तिम पाद में 'त्वम्' के बाद 'च' पद का प्रयोग उचित था। श्लोक का अर्थ यह है कि शिव जी से मेल करने की इच्छा के कारण दोनों ही की अवस्था शोचनीय है। एक तो चन्द्रमा की कान्ति वाली कला की तथा दूसरे लोकलोचनचन्द्रिका रूप तुम पार्वती की। भग्नप्रक्रमता—भग्न है प्रक्रम उद्देश (कथन) के अनुकूल प्रस्तुत कथन जिसमें। जैसे—'यशोऽधिगन्तुम्' इस श्लोक में 'सुखलिप्सया वा' इसकी जगह 'सुखमीहितुं वा' इस प्रकार तुमन्त प्रयोग ही उचित है। ख्यातिहतता—प्रसिद्धि का परित्याग। जैसे—मेघादि का गर्जनादि ही प्रसिद्ध है। इसका विपरीत वर्णन करना ख्यातिहतता है। वाक्यान्तर से सम्बद्ध पदों का वाक्यान्तर में प्रवेश करना सङ्कर कहलाता है। जैसे—अरी सखी! तू देखती क्यों नहीं कि तेरे नाथ तेरे पैरों पर पड़े हुए हैं। गुस्सा छोड़कर इनकी इज्जत कर। यहाँ पर जैसा मूल में लिखा है, वैसा अन्वय करने से अर्थ बनता है, अन्यथा नहीं। जब एक ही वाक्य हो तब दूरान्वय होने पर क्लिष्टत्व दोष होता है। भिन्न भिन्न अनेक वाक्यों के होने पर संकर दोष होता है। वाक्यान्तर में वाक्यान्तर का प्रवेश होने पर गर्भितत्व दोष होता है। जैसे—'परापकार' इत्यादि पद्य में तृतीय पाद चतुर्थ पाद में प्रविष्ट है। जब एक वाक्य दूसरे वाक्य में प्रविष्ट हो तब गर्भितत्व दोष होता है तथा वाक्यान्तर का कोई पद वाक्यान्तर में प्रविष्ट हो तब सङ्कर दोष होता है, यह तत्त्व होता है।

अर्थदोषानाह—

'दुष्क्रमग्राम्यकष्टत्वं व्याहतत्वमहेतुता।
अनवीकृतता पौनरुक्त्यं ख्यातिविरुद्धता॥
अनुवादो विधेश्चैवमर्थदोषाः प्रकीर्त्तिताः॥'

दुष्क्रमता—दुः—दुष्टः, विरुद्ध इति यावत्, क्रमः—वचनक्रमो यस्मिन् स दुष्क्रमः। यथा—वसन्तादिवर्णने प्रथमं प्रबालो-

द्रुमस्य, ततः कुसुमोत्पत्तेरनन्तरं पुष्पेषु शिलीमुखानाम् आपतन-मिति यथाक्रममेवैतेषामाविष्करणमुचितम्, विशिष्टहेतुं विना ततोऽन्यथावर्णने दुष्क्रमतादोषः। एवमन्यत्रापि।

ग्राम्यत्वं यथा—

"ताम्रभृङ्गारतुल्योऽयमर्को मज्जति वारिधौ"।

कष्टत्वम्—अर्थप्रतीतेर्व्यवहितत्वम्। यथा—

सदा मध्ये यासामियममृतनिष्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥४४॥

तत्र यासां कविरुचीनां मध्ये सुकुमारचित्रमध्यमाऽऽत्मकत्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु? इत्येकोऽर्थः। यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्ति? इति द्वितीयोऽर्थः। अर्थद्वयमपि नितरां दुर्बोधम्। शब्दानां परिवर्त्तनेऽपि कष्टतायास्तादवस्थ्यादयमर्थदोषः।

**टीका**—अर्थदोषानाह—दुष्क्रमेत्यादिना। **ताम्रेति**—ताम्रभृङ्गारेण ताम्रनिर्मितजलसंभृतमहत्कमण्डलुना तुल्यः सदृशोऽयमर्कः सूर्यः वारिधौ समुद्रे मज्जति ब्रुडति इत्यर्थः। ग्राम्यत्वमधमोक्तिषु गुणः। यथा—

"एसो ससहरबिंबो दीसइ हैअंगवीणपिंडो व्व।
एदे अ रस्सिसमोहा पडंति आसासु दुद्धधार व्व॥"

["एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव। एते च रश्मिसमूहा पतन्ति आशासु दुग्धधारा इव॥" इति संस्कृतम्]। एसो इति—इयं हि विदूषकोक्तिः। एषः परिदृश्यमानः, शशधरबिम्बः चन्द्रमण्डलम् ("बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः), हैयङ्गवीनपिण्डः नवनीतपिण्ड इव, दृश्यते, जनैरिति शेषः। एते च रश्मिसमूहाः किरणसङ्घाः, आशासु दिक्षु ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः), दुग्धधारा इव पतन्ति। अत्र हैयङ्गवीन-

पिण्डदुग्धधाराशब्दप्रयोगो ग्राम्यः वक्तुरधमत्वप्रतीतिकरत्वाद् गुण एव।

स्वदेति—स्वकाव्यस्य दोषाभावसमर्थनाय कस्यचित् कवेरुक्तिरियम्। शिखरिणी वृत्तम्। महान्तः कवयः द्वादशाऽदित्याश्च ते च कूर्मपुराणे प्रोक्ताः—"विवस्वान्[1] अर्यमा[2] पूषा[3] त्वष्टा[4]ऽथ सविता[5] भगः[6]। धाता[7] विधाता[8] वरुणो[9] मित्रः[10] शक्र[11] उरुक्रमः[12]॥" इति। रुचयोऽभिप्राया प्रभाश्च। अमृतं सुधा जलं च। रसः शृङ्गारादिर्माधुर्यं च। सरस्वती वाणी नदी च। उद्दामा प्रौढा महती च। मार्गो रीतिः पन्थाश्च। परिमलं चमत्कारः सौगन्ध्यं च। घनो निबिडो मेघश्च। परिचिताः अभ्यस्ताः सम्बद्धाश्च। प्रसादः सुव्यक्तत्वं स्वच्छता चेत्येते द्व्यर्थकाः शब्दाः। तथाच यासां कविरुचीनां कवेरभिप्रायाणां ( काव्यरूपाणां ) मध्ये सदा अमृतनिष्यन्दा सुधास्राविणी चासौ सुरसा सुष्ठु रसाः शृङ्गारादयो यत्र तादृशी, उद्दामा प्रौढा, बहुमार्गा सुकुमारविचित्रमध्यमात्मकमार्गत्रयवर्ती, वैदर्भीगौडीपाञ्चाल्याख्यरीतित्रयवर्तीति यावत्, एतादृशी इयं सरस्वती वाणी ( कवित्वरूपा भारती ) परिमलं चमत्कारं वहति दधाति; ताः एताः महतां कवीनां रुचयोऽभिप्रायाः ( काव्यरूपाः ) घनपरिचिताः अत्यभ्यस्ता वा यद्वा, गंभीरकाव्याभ्यस्ताः, स्फुरिता अनुभवारूढा सत्यो मधुराः अभीष्टाः, यद्वा स्फुरितः विषयीकृतः मधुरः शृङ्गारादिरसो याभिस्ताः, महाकाव्यव्योम्नि व्योमसदृशात्यन्तापरिच्छेद्ये महाकाव्ये ( काव्यमार्गे ) केन प्रकारेण प्रसादं सुबोधत्वं ( स्फुटतां ) यान्तु गच्छन्तु, कथमितरकाव्यवत् प्रसन्नाः ( सुबोधाः ) भवन्तु, न कथमपीति भाव इति प्रकृतपक्षेऽर्थः। **अप्रकृतपक्षे** तु यासाम् आदित्यप्रभाणां मध्ये सदा अमृतनिस्यन्दा जलस्राविणी चासौ सुरसा सुमधुरा ( सुष्ठुस्वादा ), उद्दामा महती बहुमार्गा त्रिपथगामिनी इयं गङ्गाख्या सरस्वती नदी [ "सरस्वती सरिद्भेदे भूवाग्देवतयोरपि। स्त्रीरत्ने चापगायां च—"इति विश्वः। ] परिमलं सुराङ्गनाङ्गसङ्गसंभवं सौगन्ध्यम्, यद्वा, परिगतो मलो यस्यां क्रियायामिति व्युत्पत्त्या क्रियाविशेषणम्, परिमलं स्वच्छं यथा स्यात्तथा वहति; ताः एताः स्फुरितेन प्रकाशेन मधुराः मनोहराः, यद्वा स्फुरितो दृष्टो मधुरो रम्यपदार्थो याभिस्तथाभूताः महतां द्वादशादित्यानां रुचयः प्रभाः, महाकाव्यव्योम्नि महाकाव्यसदृशव्योम्नि, घनपरिचिताः मेघसंबद्धाः वर्षाकालीनाः सत्यः केन प्रकारेण प्रसादं स्वच्छताम्, यान्तु कथमितरशरदादिकालिकप्रभावात् स्वच्छाः भवन्तु, न कथमपीत्यर्थः। अन्यत् स्पष्टम् ॥४४॥

भाषार्थ—दुष्क्रमत्व, ग्राम्यत्व, कष्टत्व, व्याहतत्व, अहेतुत्व, अनवीकृतत्व, पुनरुक्तत्व, ख्यातिविरुद्धत्व, विध्यनुवादत्व—यह अर्थदोष हैं। जिसमें दुष्ट क्रम हो, उसे दुष्क्रम कहते हैं। जैसे वसन्तवर्णन में पहले प्रवालोद्गम, फिर कुसुमोद्गम, फिर फूलों पर भौरों का गिरना वर्णन करना चाहिये परन्तु किसी विशेष कारण को बिना दिखलाये अन्यथा वर्णन करना दुष्क्रमता दोष है। ऐसे ही और भी समझो। ग्राम्यत्व जैसे—'ताम्र-भृङ्गार' इत्यादि पद्य में। कष्टत्व—अर्थ ज्ञान होने में विलम्ब होना। जैसे 'सदा मध्ये' इत्यादि पद्य में। इसकी सविस्तर व्याख्या हम संस्कृत टीका में कर चुके हैं। यहाँ पर जिन कविरुचियों में सुकुमार, चित्र, मध्यम रूप से तीन मार्गों वाली सरस्वती चमत्कार को धारण करती है, वे गम्भीर काव्य की अभ्यास वाली कविरुचियां साधारण काव्यों की भांति कैसे प्रसन्न हों। यह एक अर्थ है। तथा जिन कवि ( सूर्य ) प्रभाओं के बीच में गङ्गा जी बहती हैं, वे मेघ से परिचित कैसे प्रसन्न हों, यह द्वितीय अर्थ है। यह दोनों ही अर्थ दुर्बोध हैं। शब्दों के परिवर्तन करने पर भी अर्थकष्टता दूर नहीं होती। अतः यह अर्थदोष है।

कस्यचित् प्रागुत्कर्षमपकर्षं वा अभिधाय पश्चात् तदन्यथा-प्रतिपादनं व्याहतत्वम्। यथा—

हरन्ति हृदयं यूनां न नवेन्दुकलाऽऽदयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥४५॥

अत्र येषामिन्दुकला नाऽऽनन्दहेतुः, तेषामेवाऽऽनन्दाय तन्व्यां चन्द्रिकात्वाऽऽरोपः।

अहेतुता—( निर्हेतुता ) हेतोरवचनम्। यथा—

गृहीतं येनाऽऽसीः परपरिभवान्नोचितमपि
प्रभावात् यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते ॥४६॥ [वेणीसंहार०]

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम्।

टीका—हरन्तीति—यैर्युवभिरियं लोकलोचनकृते चन्द्रिकेव वर्तमाना

तन्वी कृशाङ्गी ललना वीक्ष्यते, तेषां यूनां तरुणानां हृदयं नवेन्दुकलादयः नवीन-चन्द्रकलाप्रभृतयो हृदयं न हरन्ति इत्यर्थः ॥४५॥

निर्हेतुताम् ( अहेतुताम् ) उदाहरति—**गृहीतमिति**। कर्णाय कुप्यतोऽश्वत्थाम्नः शस्त्रं त्यजत इयमुक्तिर्वेणयाम्। हे शस्त्र! येन मम पित्रेति शेषः, त्वं परेषां शत्रूणां परिभवात् परिभवमुद्दिश्य ( परिभवभयादित्यस्मिन्नपि पाठेऽप्ययमेवार्थः ) तं निराकर्तुमित्यर्थः। नोचितमपि अनुचितमपि ब्राह्मणधर्मविरुद्धमपि गृहीतं स्वीकृतमासीरभूः। यस्य मत्पितुः प्रभावात् तव कश्चित्कोऽपि जनः विषयः गोचरो नाभूदिति न सर्वोऽपि तव विषयोऽभूदित्यर्थः। द्रोणस्य सर्वजयित्वादिति भावः। तेन त्वं सुतशोकात् परित्यक्तमसि भयात्तु न परित्यक्तमसि। हे शस्त्र! अहमपि त्वां विमोक्ष्ये, पितृशोकादेवेत्यर्थः। यतस्त्वां त्यक्ष्यामि अतो भवते स्वस्ति कल्याणमस्तु। शिखरिणी वृत्तम् ॥४६॥

इदं तु बोध्यम्—"निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति"।

यथा—"चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माऽऽश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥" [कुमारस०]

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते। **चन्द्रमिति**—पार्वत्या मुखवर्णनमिदम्। लोला चपला, लक्ष्मीः, चन्द्रं गता सती, रात्राविति भावः, पद्मगुणान् कमलस्थितिजनितसुखानीति यावत्, न भुङ्क्ते नाऽऽस्वादयति, पद्माऽऽश्रिता पद्माधिष्ठिता सती, दिवसे इति भावः ('अह्वयम्भोजं विकसति' इति कविसमयप्रसिद्धेः), चान्द्रमसीं चान्द्रीम्, अभिख्यां शोभाम् ( "अभिख्या नामशोभयोः" इत्यमरः ), न भुङ्क्ते; तु किन्तु, उमायाः पार्वत्याः, मुखम्, प्रतिपद्य प्राप्य, द्विसंश्रयां चन्द्रकमलवासजनितामिति भावः, प्रीतिम् आनन्दम्, अवाप प्राप। पार्वत्या वदनं चन्द्रः, कमले च नेत्रे, तेषाञ्च दिवारात्रं तुल्यविकासित्वादिति भावः। उपजातिः छन्दः।

**भाषार्थ**—किसी वस्तु के उत्कर्ष या अपकर्ष को कहकर बाद में उसके विरुद्ध कहना व्याहतत्व ( व्याघात ) दोष है। जैसे—'हरन्ति' इत्यादि पद्य में। जिन लोगों को चन्द्रमा की नूतन कला आनन्द नहीं देती, उन्हीं को आनन्दित करने के लिये यहां प्रकृत कामिनी में चन्द्रिकात्व का आरोप किया गया है। यही व्याहतत्व है। अहेतुता ( हेतु का न होना )

अर्थात् हेतु का कथन न करना। जैसे—हे शस्त्र! जिस मेरे पिता जी ने दूसरों से तिरस्कार के भय से अपने ब्राह्मण धर्म के विरुद्ध तुझे ग्रहण किया था तथा जिसके प्रभाव से तेरा कोई विषय नहीं था, यह बात नहीं, सब ही विजेतव्य होने से विषय थे; उस पिता जी ने तुझ शस्त्र को पुत्रशोक से छोड़ा है, भय से नहीं। तथा मैं भी तुझे (पितृशोक से) छोड़ूँगा, भय से नहीं। अतः हे शस्त्र! तेरा कल्याण हो। यहाँ दूसरे शस्त्रं के छोड़ने में हेतु नहीं कहा है।

अनवीकृतत्वं यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किम्?<br>
दत्तं पदं शिरसि विद्विषतां ततः किम्?।<br>
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्?<br>
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्? ॥४७॥ [वैराग्यशत०]

अत्र "ततः किम्?" इति न नवीकृतम्।

पौनरुक्त्यं यथा—

अस्त्रज्वालाऽवलीढप्रतिबलजलधेरन्तरौर्वायमाणे<br>
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम्।<br>
कर्णालं सम्भ्रमेण, व्रज कृप! समरं, मुञ्च हार्दिक्य! शङ्कां<br>
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः?॥४८॥<br>
[वेणीसंहार०]

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः।

**टीका—प्राप्ता** इति—कस्यचिद्वैराग्यवत उक्तिरियम्। सकलकामदुघाः सकलमनोरथसम्पादयित्र्यः, श्रियो लक्ष्म्यः प्राप्तास्ततः किम्? न किमपि फलमित्यर्थः। विद्विषतां शत्रूणां शिरसि पदं दत्तं ततः किम्? विभवैर्धनैः प्रणयिनोऽनुरक्ताः सुहृद्बान्धवाः सन्तर्पिताः साधु तोषितास्ततः किम्? न किमपि महत्फलमलौकिकमित्यर्थः। तनुभृतां देहधारिणां तनुभिः कल्पं कल्पपर्यन्तं यदि स्थितं न जीर्णं ततः किम्? न किमपि फलमित्यर्थः ॥४७॥ अतः ततः किमिति न नवीकृतम्। एतत्तु स्मरणीयम्, यत् भङ्ग्यन्तरेण निर्देश्यत्वं नवीकृतत्वम्। "किं ततः" इत्यत्र "किं तस्मात्" इत्यादि-रूपेण शब्दपरिवर्त्तनेऽपि उत्कर्षाभावादनवीकृतत्वमेवेति कथितपदत्वाद्भेदः।

अस्त्रेति—अस्त्राणां क्षेपणीयास्त्राणां ज्वालाभिर्हेतिभिरवलीढो ग्रस्तो यः प्रतिवलजलधिः शत्रुसैन्यसागरः, तस्यान्तरौर्वायमाणे वडवाग्नाविवाचरति सति, अस्मिन् सर्वधन्वीश्वराणां निखिलधनुर्धरश्रेष्ठानाम् गुरौ आचार्ये मम पितरि द्रोणेऽस्मिन् युद्धे सेनानाथे सेनानायके स्थिते वर्तमाने सति हे कर्ण ! सम्भ्रमेण भीत्याऽलं कृतम् । हे कृप ! समरं युद्धस्थलं व्रज गच्छ । हे हार्दिक्य ! हृदिकापुत्र ! कृतवर्मन् ! शङ्कां त्रासं मुञ्च परित्यज । चापद्वितीये चापसहाये ताते पितरि रणधुरां रणभारं सैनापत्यमित्यर्थः, वहति धारयति सति भयस्य कोऽवकाशः, न कश्चिदित्यर्थः । स्रग्धरा वृत्तम् ॥४८॥

भाषार्थ—अनवीकृतत्व जैसे—'प्राप्ताः श्रियः' इत्यादि । यदि सारे कामों को देने वाली लक्ष्मी प्राप्त कर ली तौ क्या ? शत्रुओं को हरा दिया तौ क्या ? यदि प्रेमी मित्र-बन्धुओं को तृप्त कर दिया तौ क्या ? यदि देहधारियों के देह एक कल्प पर्यन्त स्थित रहे तौ क्या ? यहाँ 'ततः किम्' 'ततः किम्' की झड़ी लगा दी है, जो कुछ नवीनता को पुष्ट नहीं करती । पौनरुक्त्य जैसे—अस्त्र की ज्वाला से ज्वलित होता हुआ जो शत्रुसेना रूपी समुद्र उसमें वडवाग्नि के समान बने हुए सारे धनुर्धरों के गुरु मेरे पिता द्रोण के इस युद्ध में सेनापति होने पर हे कर्ण ! डरो मत, हे कृप ! युद्ध को चलो, हे हार्दिक्य ! हृदिका नामक माता के पुत्र ! कृपाचार्य ! शङ्का को छोड़ दो । धनुष को हाथ में लेकर पिता जी के रण में उतर आने पर डर की क्या बात है ? यहाँ चतुर्थ पाद के वाक्य का अर्थ पुनरुक्त है ।

**ख्यातिविरुद्धता यथा—**

**"ततश्चचार समरे शितशूलधरो हरिः" ।**

**अत्र हरेः शूलं लोकेऽप्रसिद्धम् ।**

**विधेः—विधेयस्य, अनुवादः—अप्राधान्येन निर्देशः । यथा—"प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम्" इत्यत्र शयितः प्रयत्नेन बोध्यसे इति विधेयम् ।**

टीका—ख्यातिः प्रसिद्धिस्तया विरुद्धता विरोध इत्यर्थः । क्वचित् क्वचित् स्थले ख्यातिविरुद्धताऽपि गुणो भवति यदि कविसम्प्रदाये तादृशी प्रसिद्धिरस्ति । तदुक्तम्—

"कवीनां समये ख्याते गुणः ख्यातिविरुद्धता"। [ विश्वनाथः ]

**कविसमयख्यातानि** दर्पणे—

"मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्त्योः,
रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवराऽऽदि।
तोयाऽऽधारेऽखिलेऽपि प्रसरति च मरालाऽऽदिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैः जलधरसमये मानसं यान्ति हंसाः॥
पादाऽऽघातादशोकं विकसति, वकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः, स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला, धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्॥
अह्वयम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे,
मेघध्वानेषु नृत्यं भवति च शिखिनां, नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे॥"

अस्यायमर्थः—मालिन्यमिति। व्योम्नि आकाशे, पापे च मालिन्यम्; यशसि, तथा हासकीर्त्त्योश्च धवलता शुभ्रता, वर्ण्यते, कविभिरिति शेषः। आकाशं पापञ्च कृष्णवर्णम्, यशः कीर्त्तिर्हासश्च श्वेतवर्णो वर्णनीय इत्यर्थः। क्रोधरागौ कोपानुरागौ, रक्तौ रक्तवर्णौ, वर्ण्येते इति शेषः। पङ्कजेन्दीवराऽऽदि पद्मकुवलयाऽऽदि, सरिदुदधिगतम् नदीसागरगतम्, वर्ण्यते इति शेषः। अखिलेऽपि सर्वस्मिन्नेव, तोयाधारे जलाशये, मरालादिकः हंसादिकः, पक्षिसंघः, प्रसरति विचरति। चकोरैः पक्षिभेदैः, ज्योत्स्ना पेया पातव्या। जलधरसमये वर्षासु इत्यर्थः, हंसाः मानसं तदाख्यं सरोवरं यान्ति। योषितां रमणीनाम्, पादाघातात् चरणताडनात्, अशोकं तदाख्यं पुष्पम्, आस्यमद्यैः मुखनिःसृतसीधुगण्डूषैः, वकुलञ्च विकसति। यूनाम् तरुणानाम्, अङ्गेषु, हाराः, वर्णनीया इति शेषः। विप्रयोगस्य विरहस्य, तापैः सन्तापैः, हृदयं स्फुटति विदीर्य्यते। पुष्पकेतोः कामस्य, मौर्वी ज्या, रोलम्बमाला भ्रमरश्रेणी। धनुः कौसुमम्। विशिखाः शराः, कौसुमाः कुसुमनिर्मिताः। अस्य कामस्य, बाणैः युवजनानां हृदयं भिन्नं विदीर्णम्, स्यात्। स्त्रीणां कटाक्षेण तद्वत् भिन्नं स्यादिति भावः। अह्नि

दिवसे, अम्भोजं पद्मम्, निशायां कुमुदं कैरवम् तथा शुक्लपक्षे चन्द्रिका विकसति। चन्द्रिकायाः शुक्लपक्षीयसमस्तरात्रिभागे असद्भावेऽपि सा वर्णनीया इति भावः। मेघानां ध्वनिषु ध्वनिषु सत्सु, शिखिनां मयूराणाम्, नृत्यं भवति। अशोके च फलं नापि नैव, स्यात्। वसन्ते जाती जातीपुष्पम्, न स्यात्। गन्धसारद्रुमाणां चन्दनवृक्षाणाम्, कुसुमं फलं च न स्यात् इत्यादि तथा अन्यत् कवीनां समयगतं सिद्धान्तसिद्धं वस्तु सत्कवीनाम् प्रबन्धे ग्रन्थे, उन्नेयं द्रष्टव्यम्। स्रग्धरानिबद्धा श्लोकाः।

अस्य हिन्दीभाषार्थो विस्तरभयान्न लिख्यते। अमौलिकत्वाच्च नेदमुपयुक्तमपि।

**तत** इति—समरे युद्धे शितं तीक्ष्णं शूलं धरतीति तादृशः सन् इदं भावार्थकथनमात्रम्। समासघटकत्वं तु धरतेः पचाद्यजन्तस्यैवेति बोध्यम्। हरिर्विष्णुश्चचार बभ्रामेत्यर्थः।

अत्र शूलशब्दस्य पर्य्यायान्तरेणोपादानेऽपि दोषस्यास्य सद्भाव इति प्रसिद्धिहतत्वाद्भेद इति बोध्यम्।

**भाषार्थ**—ख्यातिविरुद्धता जैसे—'फिर तेज शूल लेकर विष्णु भगवान् युद्धक्षेत्र में घूमने लगे'। यहाँ विष्णु का शूल धारण लोक में अप्रसिद्ध है। विधि=विधेय का अनुवाद=गौण रूप से निर्देश। जैसे—'आज रात्रि के अन्त में प्रयत्न से स्तुतियों द्वारा जगाया हुआ तू (दुर्योधन) वृकोदरादि से रहित पृथ्वी को देखेगा' कुपित अश्वत्थामा की इस उक्ति में—"प्रयत्नेन त्वं बोध्यसे" इस प्रकार बोधन विधेय है, जो एकदम गुणीभूत हो गया है।

रसदोषानाह—

**रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।**
**प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः॥**
**अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः।**
**अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्य्ययः॥**
**इत्यादिकाः सहृदयैः रसे दोषाः प्रकीर्त्तिताः॥**

रसस्य स्वशब्देन—"रसः" इति शब्देन, हास्यादिशब्देन वा, अभिधानम्, स्थायिनां—हासाऽऽदीनाम्, सञ्चारिणां—निर्वेदादीनाञ्च, स्वनाम्ना कथनं दोषः । प्रतिकूलानां—विरुद्धानाम्, विभावाऽऽदीनां ग्रहः—ग्रहणम् ।

यथा—आदिमे निर्वेदाऽऽदीनां शान्तसञ्चारिणाम्, वीरे च वैवर्ण्यत्रासाऽऽदीनां भयानकस्यानुभावाऽऽदीनां ग्रहणम् ।

पुनःपुनर्दीप्तिर्यथा—कादम्बर्यां महाश्वेताविलापे ।

अकाण्डे—अनुचितेऽवसरे, प्रथनं—प्रकटनम् । यथा—वेण्यां द्वितीयेऽङ्के अनेकवीरसङ्क्षये प्रवृत्ते दुर्य्योधनस्य भानुमत्या प्रमोदवर्णनम् ।

अकाण्डे छेदः यथा—वीरचरिते राघवभार्गवयोर्द्धाराधिरूढे सङ्ग्रामे "कङ्कणमोचनाय गच्छामि" इति राघवस्योक्तिः ।

अङ्गस्य अतिविस्तृति; यथा—किरातार्जुनीये सुराङ्गनाविलासाऽऽदिवर्णने ।

अङ्गिनोऽननुसन्धानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्याऽऽगमने सागरिकाया विस्मृतिः ।

**टीका**—रसस्य स्वशब्देनोक्तिर्वचनम् । स्थायिभावस्य सञ्चारिभावस्य च स्वशब्देनोक्तिः । (रस)प्रतिकूलानां विभावादीनां ग्रहो ग्रहणम् । पुनःपुना रसस्य दीप्तिः । यथा रतिविलापे कुमारसम्भवे अकाण्डे प्रथनमकाण्डे च च्छेदः, प्रकृतीनां विपर्ययः, इत्यादिका दोषा रसगता विज्ञेयाः । अकाण्डेऽस्थाने इत्यर्थः । प्रतिकूलानामिति—प्रतिकूलविभावादिग्रहणस्य न सर्वत्र दोषता । तदुक्तम्—

"सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ।" [विश्वनाथः]

यथा—क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ? ॥ [विक्रमो०]

**क्वाकार्य्यमि**ति—उर्व्वशीवियोगेन स्वमरणोद्योगान्निवृत्तस्य पुरूरवस उक्तिरियम् । अकार्य्यं स्त्रिया सह मरणरूपमित्यर्थः, क्व ? शशलक्ष्मणः

चन्द्रस्य, कुलञ्च क्व ? चन्द्रवंशोत्पन्नस्य मम अकार्य्यं न कथमपि युज्यते इति असदृशसमावेशसूचकं क्वद्वयमिति भावः। सा उर्वशी, भूयोऽपि पुनरपि, दृश्येत ? पुनस्तां द्रष्टुं शक्ष्यामि किम् ? मे मम, श्रुतं शास्त्रज्ञानम्, दोषाणाम्, प्रशमाय शान्तये, शास्त्रं ज्ञात्वा कथमहमकार्य्यं करोमि ? इति भावः। अहो ! इति विषादे, कोपेऽपि मुखम्, उर्वश्या इति शेषः, कान्तं मनोहरम्। अपकल्मषाः निष्पापाः, कृतधियः विद्वांसः किं वक्ष्यन्ति ? ईदृशं मां दृष्ट्वा निन्दिष्यन्तीत्यर्थः। सा स्वप्नेऽपि दुर्लभा अदर्शनीयेति यावत्। हे चेतः ! चित्त ! स्वास्थ्यं धैर्य्यम्, उपैहि अवलम्बस्व। कः खलु धन्यः भाग्यवान्, युवा तरुणपुरुषः, अधरम्, तस्या इति शेषः, धास्यति ? पास्यति ?। शार्दूलविक्रीडितं छन्दः। अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः, पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति। निर्वेदादीनामिति—अत्रादिपदेन हर्षधृतिवितर्कस्मृतिमतीनां ग्रहणम्। त्रासादीनामिति—अत्रादिपदेन ग्लानिदैन्यादीनां ग्रहणम्। भयानकस्येति—इदं शृङ्गारबीभत्सादेरप्युपलक्षणम्। शृङ्गारादेरपि वीरे विरुद्धत्वं फलितम्। एवं च वीरे रतिशोकघृणौत्सुक्यचिन्तादीनां वर्णनमनुचितमेवेति वेदितव्यम्। द्वाराधिरूढे इति—द्वारम् अधिरूढः तस्मिन्, प्रारब्धे इत्यर्थः। [ "धाराऽधिरूढे" इति पाठान्तरे—प्रवाहरूपेण प्रवृत्ते इत्यर्थः। "दूराधिरूढे" इति पाठे तु—दूरम् अत्यन्तम्, अधिरूढे उद्भूते उद्रेकं प्राप्ते इति यावत् ]। कङ्कणमोचनाय। अतिविस्तृतिरिति—यथा किराते तत्र देवाङ्गनाविलासवर्णने वीररस्याङ्गिभूतस्य शृङ्गारेण तिरोभावः कृत इत्यर्थः। अङ्गिनः=प्रधानस्य, पात्रस्य रसस्य वा।

**भाषार्थ**—रसस्येति—शृङ्गारादि रसों का स्वशब्द—रसादि संज्ञा से कथन करना, स्थायिभाव संचारिभाव का भी नाम लेकर कहना, रस के विपरीत विभावादि का काव्य में निबन्धन करना, रस को बार बार दीप्त करना, बिना मौके रसों को बढ़ा देना, तथा बेमौके ही—अस्थान में रस का भङ्ग कर देना, किसी अङ्ग का बहुत विस्तार करके दिखाना, अङ्गी रस की उपेक्षा करना, प्रकृति=नायकों की दिव्यादिव्यादि प्रकृतियों के विपरीत नायक का दिखाना इत्यादि दोष रसगत होते हैं। रस का स्वशब्द=रसशब्द, हास्यादि शब्द से कथन करना, स्थायीभाव हासादि सञ्चारीभाव निर्वेदादि का नाम लेकर कहना, रस के प्रतिकूल विभावादि का ग्रहण करना। जैसे—शृङ्गार में

निर्वेदादि जो शान्त रस के सञ्चारी भाव हैं, दिखा दिये जावें। तथा वीर रस में विवर्णता ( मुँह की हवा उड़ना ), डर जो भयानक के अनुभाव हैं, वे दिखा दिये जावें। बार बार दीप्ति—जैसे कादम्बरी में महाश्वेता के विलाप में। अकाण्ड—अनुचित अवसर पर प्रथन—विस्तार। जैसे—वेणीसंहार के दूसरे अङ्क में अनेक वीरों के नाश होने पर दुर्योधन का भानुमती के साथ विनोद ( विलास ) का वर्णन। अकाण्डच्छेद—जैसे वीरचरित ( उत्तररामचरित जो कि महावीरचरित का उत्तरार्द्ध स्वरूप है ) में जब राम और परशुराम में गरम २ बातें होने लगीं तो राम कहते हैं कि 'मैं कँगना खुलवाने जा रहा हूँ।' बस, रस का ही पटाक्षेप हो जाता है। अङ्ग का विस्तार—जैसे किरातार्जुनीय काव्य में अप्सराओं के विलास का वर्णन बहुत बढ़ा दिया है। अङ्गी रस की परवाह न करना—जैसे रत्नावली के चतुर्थ अङ्क में बाभ्रव्य के आने पर सागरिका अपने को भूल जाती है।

**प्रकृतयः—दिव्याः, अदिव्याः, दिव्यादिव्याश्च, तेषु च धीरोदात्ताऽऽदयः, तत्र यो यथाभूतः, तस्यायथावर्णने प्रकृतिविपर्ययो दोषः; यथा—रामस्य छद्मना बालिवधः। यथा वा—कुमारसम्भवे अष्टमे उत्तमदैवतयोः पार्वतीपरमेश्वरयोः सम्भोगवर्णनम्।**

दोषाणां क्वचिददोषत्वं क्वचिद्गुणत्वं च—

**उक्तानां दोषाणां केषाञ्चित् क्वचिददोषत्वं, क्वचिद्गुणत्वञ्च।**

**'अनुकरणाश्च सर्वेषां दोषाणां स्याददोषता।'**

**यथा—"प्रलपत्येष वैधेयः स्कन्धस्ते यदि बाधति।"**

**अत्र बाधतीति दुष्टमप्यनुकरणत्वाददुष्टम्।**

इति दोषविवेचनं नाम पञ्चमशिखा।

---

**टीका**—अनुकरणमिति—सर्वेषां दोषाणामनुकरणमदोषता स्यात्—इत्यन्वयपूर्वकोऽर्थः। वैधेयः मूर्ख इत्यर्थः। अन्येषामपि दोषाणामदोषत्वं पूर्वं ख्यातिविरुद्धादिस्थले प्रदर्शितम्। अत्र पुस्तकान्तरेषु "तच्च तत्तद्दोषोल्लेखस्थलेषु पत्राधोभागे द्रष्टव्यमिति पाठः" मूले प्रमादादापतितः।

भाषार्थ—प्रकृतय इति—नायकों की प्रकृतियाँ तीन प्रकार की होती हैं—दिव्य, अदिव्य, दिव्यादिव्य। तथा उनमें भी धीरोदात्तादि भेद हैं। इन प्रकृतियों में जो जैसा है, उसके विपरीत वर्णन करना प्रकृतिविपर्यय दोष कहलाता है। जैसे—राम के द्वारा बालि का छिपकर (कपट से) वध करना। अथवा जैसे—कुमारसम्भव के अष्टमसर्ग में उत्तम देवता जो शिव-पार्वती हैं (माँ-बाप जैसे), उनके सम्भोग का वर्णन करना। उक्ताना-मिति—उक्त कुछ दोष कहीं पर दोष नहीं भी रहते, तथा कहीं उलटे गुण बन जाते हैं। अनुकरणमिति—सारे ही दोष कहीं पर दोष नहीं रहते। जैसे—'प्रलपत्येष' इत्यादि पद्य में अशुद्ध 'बाधति' क्रिया का शुद्ध 'बाधते' की जगह प्रयोग अनुकरण होने से दुष्ट नहीं है।

---

## प्रश्नोत्तरमाला

(१) पदगताः के दोषाः? तत्रानुचितार्थत्वस्य किमुदाहरणम्? — पृ० ७४, ७७

(२) अप्रतीतत्वस्य किमुदाहरणम्? — पृ० ७६

(३) "आनन्दयति ते नेत्रे" इत्यादिपद्ये को दोषः? — पृ० ८४

(४) ख्यातिहतत्वं पदगतो दोषः वाक्यगतो वा? किञ्चोदाहरणम्? — पृ० ८६

(५) अर्थदोषाः के? तेषु द्वयोरुदाहरणं दर्शय? — पृ० ९१

(६) कविसमयख्यातत्वे के गुणाः? — पृ० ९८

(७) अङ्गस्यातिविस्तारः कस्य दोषः? किञ्चोदाहरणम्? — पृ० १००

(८) अनुकरणे दोषत्वं भवति न वा? — पृ० १०२

**इति प्रश्नोत्तरसहिता पञ्चमशिखा समाप्ता।**

---

# षष्ठशिखा

गुणस्वरूपमाह मम्मटः—

'ये रसस्याङ्गिनो धर्माः शौर्याऽऽदय इवाऽऽत्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥'

आत्मन एव हि यथा शौर्य्याऽऽदयः, नाऽऽकारस्य, तथा रसस्यैव माधुर्य्याऽऽदयो गुणाः, न वर्णानाम् । अचलस्थितयः—नियतावस्थानाः ।

गुणविभागः—

'माधुर्य्यौजःप्रसादाऽऽख्यास्त्रयस्ते' समुदीरिताः ।

माधुर्य्यलक्षणमुक्तं काव्यप्रकाशे—

'आह्लादकत्वं माधुर्य्यं' चित्तस्य 'द्रुतिकारणम् ।'

आह्लादकत्वम्—आनन्दजनकत्वम् । द्रुतिः—गलितत्वमिव ।

रसविशेषे द्रुतेरातिशय्यमाह—

'करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम् ।'

[मम्मटः]

अत्यन्तद्रुतिहेतुत्वादित्यर्थः ।

रचनायां माधुर्य्यलक्षणम्—

'मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥'

[विश्वनाथः]

यथा—तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु ! मां प्रापय पत्युरन्तिकम् ॥४६॥

[कुमारस०]

---

**टीका**—अङ्गिनो मुख्यस्य रसस्य ये आत्मनः शौर्यादय इव धर्माः, तेऽचलस्थितयो गुणाः स्युरित्यन्वयः । अचलस्थितयोऽव्यभिचारिस्थितय इत्यर्थः । तथाच

ये रसं विना नावतिष्ठन्ते । स्थिताश्चावश्यं रसमुपकुर्वन्तीत्यर्थः । एवं च रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वं गुणत्वमिति लक्षणं पर्यवसन्नम् । अन्यवाक्यानां स्पष्टोऽर्थः । द्रुतिः=द्रवीभावः । मूर्ध्नीति—मूर्ध्नि शिरसि आदावित्यर्थः । वर्गस्य=कवर्गादेर्वर्गस्य योऽन्त्योऽन्तेभवो वर्णस्तेन युक्ता इत्यर्थः । अन्त्यवर्णसंयुक्ता वर्णा ट-ठ-ड-ढ-वर्णान् विना स्युः । लघू लघुस्वरोपेतौ रेफणकारौ माधुर्यव्यञ्जकौ भवतः । एवं अवृत्तिः समासरहिता, अथवाऽल्पवृत्तिः स्वल्पसमासा मधुरा च रचना माधुर्यव्यञ्जिका भवतीत्यर्थः ।

**तदिदमिति**—दग्धे कामे मृते तद्वियुक्ताया रतेर्विलापोक्तिरियम् । हे मित्र ! वसन्त ! तद्भवतेदं बन्धुजनप्रयोजनं बन्धुजनस्य त्वादृशस्य प्रयोजनं सत्ताफलं क्रियतां विधीयताम् । कदेत्याह—अनन्तरमतो मम पत्युः प्राणनाशानन्तरम् । किं क्रियतामित्याह—विधुरां वियोगदुःखितां मां ज्वलनस्य वह्नेरतिसर्जनाद् दानान्मां पत्युः कामस्य अन्तिकं प्रापय गमयेत्यर्थः । सुन्दरीवृत्तम् ॥४६॥

**भाषार्थ**—जो कि अङ्गीभूत रस के माधुर्यादि गुण हैं, वे आत्मा के शौर्य आदि के समान हैं तथा वे रस में अवश्य रहते हैं । टीका का अर्थ—जैसे शौर्य धर्म केवल आत्मा में ही रहता है शरीर में नहीं, उसी प्रकार माधुर्यादि गुण रसगत ही होते हैं, वर्णगत नहीं । अचलस्थिति=जिनकी अवस्थिति निश्चित है । गुणभेद—वे गुण माधुर्य, ओज, प्रसाद नाम के तीन हैं । माधुर्यलक्षण—आह्लादकता का नाम माधुर्य है, जो कि चित्त को आनन्द से तर कर देता है । आह्लादकत्व=आनन्दजनकत्व । द्रुति=आनन्द से पिघल जाना । करुण इति—करुण, विप्रलम्भश्रृङ्गार तथा शान्त रस में वह अधिक मात्रा में रहता है । मूर्ध्नीति—ट ठ ड ढ को छोड़कर जो वर्ण आदि में वर्गों के अन्तिम वर्ण ङ्, ण्, न्, ञ् आदि से संयुक्त हों । जैसे—'ङ्क' 'ञ्च' ( अङ्क ) ( अञ्चन ) में हैं तथा लघु ह्रस्वस्वर युक्त रेफ और णकार यह वर्ण माधुर्यगुण के व्यञ्जक होते हैं । तथा समासरहित या स्वल्पसमास वाली मधुर रचना भी माधुर्य की व्यञ्जिका होती है । जैसे—कुमारसंभव में काम के मरने पर रति विलाप करती हुई वसन्त से प्रार्थना करती है कि—अब काम के मर जाने के बाद बन्धुजनोचित आप यह काम कर दीजिए । मैं अपनी चिता बनाकर उस पर बैठी जाती हूँ । तुम चिता में आग लगा देने की कृपा करना ।

ओजःस्वरूपं तद्व्यञ्जकं वर्णाऽऽदिकञ्चाऽऽह विश्वनाथः—

'ओजश्चित्तस्य विस्तार-रूपं दीप्तत्वमुच्यते ।
वीरबीभत्सरौद्रेषु क्रमेणाऽऽधिक्यमस्य तु ॥
वर्गस्याऽऽद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।
उपर्य्यधो द्वयोर्वा स-रेफाष्ट-ठ-ड-ढैः सह ॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।
तथा समासबहुला घटनौद्धत्यशालिनी ॥

यथा—चञ्चद्भुजभ्रमितचण्डगदाऽभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः॥५०॥ [ वेणीसं० ]

**टीका—ओज** इति—चित्तस्य विस्ताररूपं दीप्तत्वमोज उच्यते । वीरबीभत्सरौद्राख्यरसेष्वस्य क्रमेण क्रमश आधिक्यं भवति । वर्गस्य आद्यतृतीयाभ्यां वर्णाभ्यां कग-चज-टड-तद-पबैरित्यर्थः, युक्तौ तदन्तिमौ तयोराद्यतृतीययोरन्तिमौ परवर्तिनौ वर्णौ खघ-छझ-ठढ-थध-फभा इत्यर्थः । यथा—क्ख ग्घ इत्यादयः । तथा उपरि शिरसि अधः पदतले, वा द्वयोः, उपर्य्यधोभागयोरित्यर्थः, सरेफाः रेफसहिताः [ 'सरेफः' इति पाठे रेफसहितः, वर्ण इति शेषः । 'सरेफौ' इति पाठस्तु प्रामादिकः, रेफयुक्तस्य यस्य कस्यचिदपि वर्णस्य ओजोव्यञ्जकत्वात् ]; क्रमेण यथा—अर्कः, अग्रम्, आर्द्रम् इत्यादयः, तथा ट-ठ-ड-ढैः सह टकारादयः शकारः षकारश्च एते वर्णाः, तस्य ओजसः, व्यञ्जकतां प्रकाशकत्वम्, गताः । तथा समासबहुला बहुसमस्तपदा, अत एव औद्धत्यशालिनी उत्कटा, घटना रचना, पदविन्यास इति यावत्, तस्य व्यञ्जकतां गतेति शेषः ।

**चञ्चदिति**—चञ्चद्भ्यां स्फुरद्भ्यां भुजाभ्यां बाहुभ्यां भ्रमिता घूर्णिता या चण्डा भीषणा गदा तस्या अभिघातेन सञ्चूर्णितमूरुयुगलं यस्य तस्य तादृशस्य सुयोधनस्य स्त्यानं घनीभूतं गाढमित्यर्थः । पुनः—अवनद्धं लिप्तं च यच्छोणितं रुधिरं तेन शोणौ रक्तवर्णौ पाणी यस्य स तादृशो भीमस्ते कचान् केशान् उत्तंसयिष्यति रचयिष्यति इत्यर्थः । वसन्ततिलकं वृत्तम् ॥५०॥

भाषार्थ—ओज इति—चित्त का विस्तार स्वरूप दीप्तत्व ओज कहाता है। वीर, बीभत्स और रौद्र रस में इसका क्रम से आधिक्य होता है। वर्गों के पहले अक्षर से मिला हुआ उसी वर्ग का दूसरा अक्षर तथा तीसरे के साथ मिला हुआ उसी वर्ग का चौथा अक्षर तथा ऊपर (जैसे—सर्प में) नीचे (जैसे—अस्त्र) अथवा दोनों ओर रेफ से युक्त अक्षर एवं ट, ठ, ड, ढ के सहित शकार और षकार (अर्थात् संस्कृतम्—यथा ट-ठ-ड-ढा ओजो व्यञ्जयन्ति तथा शकारषकारावपीत्यर्थः) इसी प्रकार समासबहुल रचना (लम्बे लम्बे समास) तथा उद्धत रचना ओज का प्रकाश करती है।

प्रसादस्वरूपं तद्व्यञ्जकान् वर्णांश्चाऽऽह स एव—

'चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च।
शब्दास्तद्व्यञ्जका अर्थ-बोधकाः श्रुतिमात्रतः॥'

यथा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्?॥५१॥
[रघु०]

इत्यादिकं कालिदासग्रन्थेषु रामायणे च बाहुल्येन द्रष्टव्यम्।

'एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः।'

गुणवृत्त्या—परम्परया।

इति गुणविवेको नाम षष्ठशिखा।

---

टीका—चित्तमिति-यः गुणश्चित्तं क्षिप्रं व्याप्नोति यथा शुष्केन्धनमनलो द्रुतं व्याप्नोति। स प्रसादः समस्तेसु रसेसु समस्तासु च रचनासु कृतावस्थितिर्ज्ञेयः। श्रुतिमात्रतः श्रवणमात्रेणार्थबोधकाः शब्दास्तद्व्यञ्जकास्तस्य प्रसादस्य व्यञ्जका इत्यर्थः।

गृहिणीति—इन्दुमतीविरहे अजस्य विलापवचनमिदम्। हे प्रिये! इत्यध्याहार्य्यम्। त्वां हरता, करुणाविमुखेन निर्दयेन, मृत्युना अन्तकेन, वद कथय, मे मम, किं न हृतम्? सर्वमेव हृतमित्यर्थः। तथा हि—त्वं मे गृहिणी गृहस्वामिनी (इति गृहिणी हृता)। त्वं मे सचिवः इष्टोपदेशकत्वात् मन्त्री

( इति मन्त्री हृतः )। त्वं मे मिथः एकान्ते ( "मिथोऽन्योऽन्यं रहस्यपि" इत्यमरः ), सखी विजनसहचारिणी ( इति सखी हृता )। तथा त्वं मे ललिते मनोज्ञे, कलाविधौ नृत्यगीताऽऽदिव्यापारे, प्रियशिष्या ( इति शिष्या हृता )। अतः सर्वमेव मे हृतमिति भावः। सुन्दरी वृत्तम् ॥५१॥ **एषामिति**—एषाम् माधुर्यादीनाम्। शब्दगुणत्वं शब्दवृत्तित्वम्। बुधैर्यदुच्यते—तद्गुणवृत्त्या गौणप्रयोगेणेत्यर्थः। स्वाश्रयोपस्थापकत्वरूपपरम्परासम्बन्धेन। स्वम् माधुर्यादिगुणास्तदाश्रयो रसस्तदुपस्थापकाः शब्दा इत्येवं सम्बन्धस्य समन्वय इति।

**भाषार्थ—जैसे सूखे इन्धन में आग झटपट लग जाती है, वैसे ही जो गुण चित्त में एक दम प्रविष्ट हो जाय, उसे 'प्रसाद' कहते हैं। वह प्रसाद समस्त रस और समस्त रचनाओं में रह सकता है। सुनते ही अर्थ का बोध कराने वाले शब्द उसके व्यञ्जक होते हैं। जैसे—इन्दुमती के मर जाने पर अज विलाप करता हुआ कहता है कि—अरी इन्दुमती ! निष्करुण मृत्यु ने तुझे हरकर मेरा सब कुछ छीन लिया। तू मेरी गृहदेवता थी। सलाह देने से तू मेरी मन्त्री थी। तू सखी थी क्योंकि तू मेरी हितकारिणी थी तथा समप्राण थी। तू मेरी ललितकलाओं में शिष्या थी। बता, तुझे हरकर मृत्यु ने मुझे लूट लिया या नहीं ? एषामिति—इन गुणों को शब्द का गुण भी कह देते हैं। वह परम्परासम्बन्ध से कहते हैं। स्वाश्रयोपस्थापकत्व परम्परा सम्बन्ध है, जिसकी व्याख्या हम संस्कृत टीका में कर चुके हैं।**

---

## प्रश्नोत्तरमाला

(१) गुणों का सामान्य लक्षण लिखो ? पृ० १०४

(२) माधुर्य के व्यञ्जक कौन से हैं ? पृ० १०४

(३) 'चञ्चद्भुज' इत्यादि पद्य में कौन सा गुण है, घटाओ ? उसका लक्षण भी लिखो ? पृ० १०६

(४) प्रसाद गुण का लक्षण तथा उसके व्यञ्जक वर्ण कौन से हैं ? पृ० १०७

एवमन्यदप्यूह्यम्।

**इति प्रश्नोत्तरसहिता षष्ठशिखा समाप्ता।**

---

# सप्तमशिखा

रीतिस्वरूपं तद्भेदांश्चाऽऽह—

'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥' [दण्डी]

प्रस्फुटान्तरौ—स्फुटप्रतीयमानभेदौ । मार्गः—रीतिः, सा च पदविन्यासप्रणालीरूपा । यथाऽऽह विश्वनाथः—

'पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् ।'

वैदर्भीस्वरूपमाह स एव—

'माधुर्य्यव्यञ्जकैर्वर्णैं रचना ललिताऽऽत्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥'

ललिताऽऽत्मिका—मधुरस्वरूपा, वृत्तिः—समासः। यथा—'तदिदं क्रियताम्' इत्यादि ( १०४ पृष्ठे ) पूर्वमुक्तम् ।

गौडीस्वरूपमाह—

'ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।
समासबहुला गौड़ी' दर्पणे समुदीरिता ॥

बन्धः—रचना । आडम्बरः—गाढः । यथा—"चञ्चद्भुज-भ्रमित" इत्यादि ( १०६ पृष्ठे ) पूर्वमुक्तम् ।

इति रीतिविवेचनं नाम सप्तमशिखा ।

**टीका**—गिरां कविगिराम् । मार्गः=रीतिरित्यर्थः । पदेति—पदानां सुप्तिङन्तानां संघटना संयोजना रीतिरित्युच्यते । तथाच पदानां संघटनाविशेषो रीतिरिति रीतिसामान्यलक्षणम् । रीयते ( रीङ्धातुर्गत्यर्थः ) ज्ञायते गुणविशेषोऽनयेति रीतिरिति व्युत्पत्तिः । रीतिः कीदृशीत्याह—अङ्गानामवयवानां संस्थानविशेषवत् स्थानविन्यासविशेषवत् । विलक्षणमुखाद्यवयवसन्निवेशवदिति यावत् । अन्यत् सर्वं स्पष्टं व्याख्यानपेक्षञ्च ।

**भाषार्थ**—रीति के भेदादि कहते हैं—कविवाणियों के अनेकों मार्ग

हैं, जिनके अनेकों अवान्तर भेद हैं। उनमें से वैदर्भी और गौड़ी दो रीतियों का वर्णन करते हैं, जिनका परस्पर भेद सुव्यक्त है। प्रस्फुटान्तर=जिनका स्फुट भेद प्रतीयमान हो। मार्ग=पदविन्यासप्रणाली रूप रीति। पदेति—पदों के परस्पर संयोग विशेष को रीति कहते हैं। वह अङ्गसंस्थान की तरह मानी जाती है। जैसे पुरुषों के देह का संगठन होता है, उसी प्रकार काव्यों के देह रूप शब्दों और अर्थों का भी संगठन होता है। इसे ही रीति कहते हैं। वैदर्भी का स्वरूप कहते हैं—माधुर्यव्यञ्जक पूर्वोक्त वर्णों के द्वारा निष्पन्न हुई समासरहित अथवा छोटे छोटे समासों से युक्त मनोहर रचना को वैदर्भी रीति कहते हैं। ललितात्मक—मधुरस्वरूप। वृत्ति—समास। जैसे—पूर्वोक्त 'तदिदं क्रियताम्' पृ० १०४ का पद्य। ओज इति—ओज को प्रकाशित करने वाले कठोर वर्णों से बनाए हुए अधिक समासों से युक्त आडम्बर (उद्भट) बन्ध को 'गौडी' रीति कहते हैं। यह लक्षण दर्पणकार ने नवम परिच्छेद में किया है। बन्ध=रचना। आडम्बर=गाढ कठोर, विचपिच। जैसे—'चञ्चद्भुज' इत्यादि पद्य पृ० १०६ पर कह आये हैं।

---

## प्रश्नोत्तरमाला

(१) रीति का सामान्य लक्षण क्या है? पृ० १०६

(२) गौडी रीति का लक्षण लिखो? पृ० १०६

एवमन्यदप्यूह्यम्।

इति प्रश्नोत्तरसहिता सप्तमशिखा समाप्ता।

---

# अष्टमशिखा

अलङ्कारस्वरूपमाह—

'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।' [ दण्डी ]

अलङ्कारविभागः—

ते च द्विविधाः—शब्दगताः अर्थगताश्च।

अथ शब्दालङ्काराः—

**शब्दगताः—अनुप्रासयमकाऽऽदयः ।**

तत्र अनुप्रासः—

**'अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।'** [विश्वनाथः]

**स्वरवैसादृश्येऽपि व्यञ्जनमात्रसादृश्यम् अनुप्रासः । स च रसानुगुणो वर्णानां प्रकर्षेण न्यासः । यथा—**

**लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्**
**समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।**
**मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्**
**रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥५२॥**

[ विश्वनाथः ]

**टीका**—स्वरस्य वैषम्येऽपि यत् शब्दानां साम्यं समता सोऽनुप्रास इत्यर्थः । उदाहरणमाह—**लते**त्यादि । वसन्तवातवर्णनमिदम् । मरुत् वायुः, गुञ्जन्तः स्वनन्तः, अव्यक्तगुनगुनध्वनिं कुर्वन्त इत्यर्थः, मदवन्तः मत्ताः, सोल्लासाः इति यावत्, अलीनां भ्रमराणाम्, पुञ्जाः समूहाः यस्मिन् तादृशम्, लताकुञ्जं लतामण्डपम्, चपलयन् कम्पयन्, अङ्गं शरीरम्, प्राणिनामिति शेषः, समालिङ्गन् संस्पृशन्, द्रुततरं सद्यः, अनङ्गं मदनम्, प्रबलयन् वर्द्धयन्, दलितं विकसितम्, अरविन्दं कमलम्, मन्दं मन्दं शनैः शनैः, तरलयन् चञ्चलीकुर्वन्, रजोवृन्दं रजसां परागाणां वृन्दं चयम्, विन्दन् गृह्णन्, दिशि दिशि मकरन्दं पुष्परसम्, किरति निक्षिपति, वर्षतीति यावत् । अत्र प्रथमे पादे 'ञ्ज' इति, द्वितीये पादे 'ङ्ग' इति, तृतीये चतुर्थे च पादे 'न्द' इति व्यञ्जनसङ्घानां पुनः पुनरावृत्तिः । शिखरिणी वृत्तम् ॥५२॥

**भाषार्थ**—अलङ्कार का स्वरूप लक्षण कहते हैं—काव्य के शोभाधायक धर्मों को अलङ्कार कहते हैं । अलङ्कार दो प्रकार के होते हैं—शब्दालङ्कार तथा अर्थालङ्कार । शब्दालङ्कार—अनुप्रास, यमक आदि हैं । अनुप्रास का लक्षण—स्वर की विषमता रहने पर भी शब्द अर्थात् पद, पदांश के साम्य को अनुप्रास कहते हैं । स्वरों की समानता चाहे हो या न हो परन्तु जहाँ एक से अनेक व्यञ्जन मिल जावें, वहाँ 'अनुप्रास' अलङ्कार होता है । अनु=रसानुकूल वर्णों का प्रकृष्टतया न्यास=रखना अनुप्रास कहाता है ।

जैसे—लतेत्यादि। गुञ्जन करते हुए मस्त भौंरों से युक्त लताकुञ्ज को चञ्चल करता हुआ, देह में लगकर अतिशीघ्र अनङ्ग=कामदेव का उद्दीपन करता हुआ, खिले कमलपुञ्ज को धीरे धीरे कम्पित करता हुआ यह मलय वायु प्रत्येक दिशा में ( मकरन्द ) फूल के रस को छिड़क रहा है। यहां 'ञ्ज' 'ङ्ग' 'न्द' का अनुप्रास है।

यमकम्—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवाऽऽवृत्तिर्यमकं विनिगद्यते॥' [ विश्वनाथः ]

अत्र द्वयोरपि वर्णसङ्घातयोः क्वचित् सार्थकत्वं, क्वचिन्निरर्थकत्वं, क्वचिदेकस्य सार्थकत्वम् अपरस्य निरर्थकत्वम्। अत उक्तं "सत्यर्थे" इति। तेनैव क्रमेणेति "दमो मोदः" इत्यादेर्विविक्तविषयत्वम्। एतच्च पदपादाऽऽद्यावृत्तित्वेन प्रभूततमभेदम्। दिङ्मात्रम् उदाह्रियते—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः॥५३॥

[ माघः ]

प्रथमे पादे द्वयोरपि, द्वितीये प्रथमस्यैव, तृतीये च द्वितीयस्यैव सार्थकत्वम्, चतुर्थे द्वयोरपि "रभिंसु" इत्येतयोर्निरर्थकत्वम्।

**टीका—सतीति**—अर्थे सति विद्यमाने सति पृथक्पृथगर्थौ यस्यास्तस्याः पृथगर्थायाः। यद्यर्थः स्यात्तर्हि अर्थोऽपि पृथग् भवेदित्यर्थः। स्वराणां व्यञ्जनानां च संहतेः समुदायस्य तेनैव पूर्वावृत्तेनैव क्रमेणावृत्तिर्यमकं विनिगद्यते उच्यते इत्यर्थः। दिङ्मात्रम्=किञ्चिन्मात्रम्—स्वल्पतममिति यावत्। **नवेति**—युधिष्ठिरारब्धराजसूये गच्छन् कृष्णो वसन्तविकासमपश्यदित्याह—**नवेत्यादिना**। स कृष्णः नवाः पलाशाः पत्राणि यस्य तादृशं पलाशवनं किंशुकारण्यं यत्र तं तादृशम्। स्फुटैर्दृश्यमानैः परागैः परागतानि व्याप्तानि पङ्कजानि यत्र तम्। मृदुलाः कोमलाः अतएव तान्ताः म्लानाः लतान्ताः लतानां प्रान्तदेशा यत्र तम्, यद्वा तान्ताभिर्लताभिरन्तं सुन्दरमित्यर्थः। 'मृताववसिते रम्ये समाप्तावन्त इष्यते' इति

शब्दार्णवः । सुमनांसि पुष्पाणि तेषां भराः समुदायास्तैरुपलक्षितम्, तैः कृत्वा वा सुरभि सुगन्धव्याप्तं सुरभि वसन्ततुं समलोकयदालुलोके । द्रुतविलम्बिताख्यं वृत्तम् ॥५३॥

अन्यत् सर्वं विशदम् । भाषायां स्पष्टीकृतञ्च ।

**भावार्थ**—यमक का लक्षण कहते हैं—अर्थवान् होने पर भिन्न भिन्न अर्थ वाले स्वर और व्यञ्जन समुदाय की उसी क्रम से आवृत्ति का नाम यमक है । जिस समुदाय की आवृत्ति की हो, यदि उस आवर्त्त्यमान का सारा अंश या एक अंश अनर्थक है तो कोई हानि नहीं, किन्तु यदि उस आवृत्त अंश का एक अंश या पूर्ण अंश सार्थक है तो आवृत हुए समुदाय की परस्पर भिन्नार्थकता आवश्यक है । तथाच समानार्थक शब्दों की आवृत्ति होने पर यमकालङ्कार नहीं होता, यह भाव है । यहाँ यमक में कहीं पर दोनों आवर्त्त्यमान वर्णसमुदायों का सार्थकत्व है तथा कहीं पर निरर्थकत्व है । एवं कहीं एक सार्थक है तो दूसरा निरर्थक । अतएव 'सत्यर्थे' यह लिखा है । "तेनैव क्रमेण" ऐसा कहने से "दमो मोदः" इत्यादि की व्यावृत्ति हो जाती है । यह पदावृत्ति या पादावृत्ति आदि भेद से अनेकों भेदों वाला है । किञ्चिन्मात्र उदाहरण दिखाते हैं—नव पलाश वाले पलाशवन से युक्त, पुष्परज से भरे कमलों से सुशोभित, धूप से कुम्हलाए हुए लतासमुदाय से युक्त तथा पुष्पजाल से अलङ्कृत सुगन्धित वसन्त को कृष्ण भगवान् ने देखा । यहाँ पलाशपद की पहले पाद में आवृत्ति है, जहाँ दोनों ही पद पत्ते और ढाक का अर्थ देकर सार्थक हैं । द्वितीय पाद में केवल पहला पराग सार्थक है, दूसरा परागत का 'पराग' अंश निरर्थक है । तृतीय पाद में दूसरा लतान्त पद सार्थक है, पहला निरर्थक । चतुर्थ चरण में दोनों 'रभिसु' निरर्थक हैं ।

श्लेषः—

**'श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ।'** [ विश्वनाथः ]

**स च वर्णप्रत्ययप्रकृतिपदाऽऽदिश्लेषात् बहुविधः । यथा—**

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।**
**अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि ॥५४॥**

[ माघः ]

**अत्र "विधौ" इत्यत्र विधुविधिशब्दयोरुकारेकारयोर्वर्णयोरौकाररूपत्वात् वर्णश्लेषः । "कर" इत्यत्र प्रकृतिश्लेषोऽपि ।**

**पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।**
**विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥५५॥**

**अत्र पदश्लेषः ।**

**टीका—श्लिष्टैरिति**—श्लिष्टैः श्लेषयुक्तैः पदैरनेकस्यार्थस्याभिधाने कथने सति श्लेषालङ्कार इष्यते । तथा चाभिधावृत्त्याऽनेकार्थबोधनं श्लेष इति शब्दश्लेषस्य लक्षणं पर्यवसन्नम् । सच्च वर्ण-पद-प्रत्यय-प्रकृतिभेदाद् बहुविधः । आदि-पदेन लिङ्ग-भाषा-विभक्ति-वचनानां ग्रहणम् । तत्र वचनं सुबन्ततिङन्तत्रिक-विभक्तीनामेकैको भागः । एकवचन-द्विवचन-बहुवचनानि चेत्यर्थः । भाषा संस्कृतप्राकृतशौरसेनीमहाराष्ट्रादिभेदादनेकविधा । तथाचाष्टविधः शब्दश्लेषः । दिङ्मात्रं यथा—**प्रतिकूलतामिति** । विधौ भाग्ये चन्द्रमसि चेत्यर्थः । "विधिर्विधाने दैवे च' इत्यमरः ।" प्रतिकूलतां वैमुख्यम् उपगते प्राप्ते सति बहुसाधनता बहूपायता विफलत्वमेति गच्छति । तत्र दृष्टान्तमाह—पतिष्यतोऽस्तं गच्छत इत्यर्थः । दिनभर्तुः भगवतो भास्करस्य करसहस्रमपि किरणार्बुदमपि, सहस्रशब्दोऽसंख्यार्थकः । अवलम्बनाय रक्षणाय नाभूत् न जातम् । पक्षे करसहस्रम्—राजदेयम् भागमव-लम्बनाय नाभूदित्यर्थः । प्रमिताक्षरा वृत्तम् ॥५४॥ **पृथुकार्त्ते**ति—राजानं प्रति कस्यापि पूर्णकामस्य भिक्षोरुक्तिरियम्—राजन् ! सम्प्रति आवयोः सदनं गृहं समं तुल्यमित्यर्थः । कथंभूतम् ? तदाह पृथुकानां बालकानामार्तस्वरस्य बुभुक्षाजनितकरुणक्रन्दनस्य पात्रं स्थानम्, राजपक्षे—पृथूनि विपुलानि कार्त्तस्वरं सुवर्णं तस्य पात्राणि भाजनानि यत्र तत् । भुवि उषिताः कृतनिवासा निःशेषाः सर्वे परिजनाः बन्धुबान्धवा यत्र तत् । राजपक्षे—भूषिता अलंकृता इत्येव विशेषः । विलसन्ती शोभमाना या करेणुः करिणी तया ताभिर्वा गहनं दुष्प्रवेशम् । दरिद्रपक्षे—बिलेषु सीदन्तीति विलसत्का मूषकाः । बवयोरभेदात् । यद्वा विलसन्तो ये रेणवः । पूर्वोक्तार्थे तेषां रेणवो धूलयस्तैर्गहनं बहुलमित्यर्थः । एवं कृत्वाऽऽवयोः सदनं सममिति भावः । आर्या वृत्तम् ॥५५॥

**भाषार्थ—श्लिष्ट पदों से अनेक अर्थों के कथन करने पर श्लेष नामक शब्दालङ्कार होता है । तथा वह वर्ण, प्रत्यय, प्रकृति, पद आदि भेद से आठ प्रकार का है ( शेषभेद संस्कृत टीका में देखो ) । जैसे—**प्रतिकूलतामिति । **विधि=दैव, भाग्य, विधु=चन्द्रमा के प्रतिकूल ( विपरीत दिशा और विपरीत**

दशा में ) होने पर सब साधन निष्फल हो जाते हैं। देखिए, सूर्य के पतन ( अस्त होने के समय ) सूर्य की हजारों किरणें किसी काम न आईं। पूर्णिमा के दिन शाम को चन्द्रमा पूर्व में जल्दी निकल आता है और उसी समय सूर्य छिपता होता है। तब सूर्य विधु के प्रतिकूल होने के कारण न बच सका तो विधि=भाग्य के प्रतिकूल होने पर तो कौन पुरुष बचेगा ? यहां 'विधौ' यह प्रयोग विधि और विधु दोनों शब्दों का सप्तमी के एकवचन में बनता है। अतः इकारोकार वर्णों के औकार रूप होने से वर्णश्लेष है। 'कर' शब्द में प्रकृति श्लेष भी है क्योंकि कर के 'किरण' और 'हाथ' दो अर्थ विवक्षित हैं। पृथुकेति—कोई भिक्षु राजा से कहता है कि हे राजन्! इस समय आपका और मेरा मकान एक सा है। न मानो तो तुलना करके देख लीजिए। देखिए, आपके घर में कार्त्तस्वर=सोने के पात्रों का ढेर है तो मेरे घर में भी पृथुक=बच्चों की रोवाराई भूख के मारे मची हुई है, वे भूख से बिलबिला रहे हैं। आपके घर में सब बन्धु, नौकर-चाकर भूषित हैं तो मेरे भी घर में सब लोग भू=पृथिवी पर उषित=लोट मारते हैं, खाट नसीब नहीं होती। आपके घर में हथनियाँ द्वार पर झूमती रहती हैं तो मेरे घर पर भी चूहे के बिलों से घर भर में धूल ही धूल है, वह धूल से शोभित है, झाड़ू मोल लाने को एक पैसा भी नहीं। यहाँ राजा की प्रशंसा पहले आपाततः प्रतीत होती है पर अन्ततो गत्वा निन्दा में पर्यवसान है कि तेरे राज्य में रहने वाला मैं इतना दुखी हूँ और तू अपनी मौज में ऐशो-आराम में मस्त है, प्रजा की सुधबुध तक नहीं लेता इत्यादि। यह पदश्लेष का उदाहरण है।

अथ अर्थालङ्काराः—

अर्थालङ्काराः—स्वभावोक्तिरुपमाऽऽदयश्च। तत्र स्वभावोक्तेर्वस्तुस्वभाववर्णनस्वरूपत्वात् स्वभाववर्णनञ्च वस्तूनां प्रकृतञ्चेत् तद्वस्तूनि प्रत्यक्षमिव दर्शयित्वा सहृदयमनांसि नितरामाकर्षतीति तस्या अतीव चमत्कारित्वात् तामेव प्रथममाह—

स्वभावोक्तिः—

'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ॥'

यथा अभिज्ञानशाकुन्तले—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम्।

**शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वात् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥५६॥**

**यथा वा—तत्रैव पञ्चमाङ्कादौ कञ्चुकिनो जरावर्णनम्। तत्रैव च सप्तमे नृपशिशोः सिंहशावकाऽऽस्कन्दनविक्रान्तिवर्णनम्।**

**टीका**—अर्थालङ्कारान्निरूपयति—अर्थालङ्कारा इत्यादिना। चेत्=यदि। वस्तूनां स्वभावस्य वर्णनं प्रकृतं प्रकरणागतं चेदित्यर्थः। स्वभावोक्तिरिति—चारु=चमत्कारातिशयाधायकत्वेन रूपेण यथावत्=वर्ण्यमानवस्तुस्वरूपमुद्दिश्य तादृशमेव वर्णनं स्वभावोक्तिरित्यर्थः। स्पष्टमन्यत्। ग्रीवेत्यादि—शाकुन्तलनाटके दुष्यन्तस्य मृगानुसरणवर्णनमिदम्। नृपः स्वसूतं सम्बोध्य ब्रूते—पश्य, अयं मृग इति पूर्वेणान्वितम्। ग्रीवायाः कन्धराया भङ्गेन पृष्ठतोऽवलोकनार्थं परिवर्तितेन अभिरामं मनोज्ञं यथा स्यात्तथा स्यन्दने मम रथे दत्तदृष्टिर्निहितनयनोऽनुपतति पतनमनुवर्तते, मुहुर्मुहुः वेगेन धावत्येवेत्यर्थः। कथं धावति तदाह—शरस्य मद्बाणस्य पृष्ठे पतनस्य भयाद्भीतेर्हेतोः पश्चार्धेन पाश्चात्यार्धभागेन पूर्वकायं कायस्य पूर्वार्धं भूयसा बाहुल्येन प्रविष्ट इव। लाङ्गूलान्तभागं सम्मुखीनचरणद्वयान्तिकमानीतवानिति भावः। श्रमेण धावनजनितपरिश्रमेण विवृतं व्यात्तं यन्मुखमास्यं तस्माद्भ्रंशिभिः पतनशीलैः अर्धावलीढैरसमग्रचर्वितैः शष्पैर्घासैः कीर्णं व्याप्तं वर्त्म मार्गो येन स तादृशः। यत्र तत्र गलितार्धचर्वितमुखनिष्पतद्घासग्रासहरितीकृतवर्त्मा इत्यर्थः। उदग्रं बहुलं प्लुतं उत्प्लुत्य गमनं यस्य तस्य भावस्तत्त्वं तस्मात् वियति आकाशे बहुतरं प्रयाति, उर्व्यां पृथिव्यां च स्तोकमल्पशः प्रयाति इत्यर्थः। स्रग्धरावृत्तम् ॥५६॥

कञ्चुकिनो जरावर्णनमिति। तद्यथा—

कञ्चुकी—अहोनुखल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि।

'आचार इत्यवहितेन मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता प्रस्थानविक्लवगतेरवलम्बनार्था ॥' इति।

सिंहशावकाऽऽस्कन्दनेति। तद्यथा—

राजा—कोऽयमबालसत्त्वो बालः—

'अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥'

बालः—जृम्भस्व सिंह ! दन्तांस्ते गणयिष्यामीति।

भावार्थ—स्वभावोक्ति, उपमा आदि अर्थालङ्कार हैं। उनमें से स्वभावोक्ति का स्वरूप वस्तुस्वभाव वर्णन है। यदि वस्तुओं की स्वाभाविकता का वर्णन प्रस्तुत ( प्रकृत ) हो तो वह वर्णन वस्तुओं का चित्र आँखों के सामने खींचकर रख देता है। तथा सहृदयों को अत्यन्त आह्लादित करता है। इसलिये स्वभावोक्ति के अत्यन्त चमत्कारी होने के कारण उसको ही हम प्रथम कहते हैं। स्वभावोक्तिलक्षण—स्वभावोक्ति वह है, जहाँ सुन्दरतया ठीक ठीक पूरा पूरा किसी वस्तु का वर्णन चमत्कार रूप में किया गया हो। जैसे—राजा दुष्यन्त सारथि से कहता है कि देखो, यह मृग किस खूबसूरती के साथ गर्दन मोड़कर रथ पर टकटकी लगाए हुए तेजी से दौड़ता चला जा रहा है। इसका पिछला भाग ( कमर के बाद का शरीर ) बाण लग जाने के डर से अगले शरीर में घुस सा गया है। दौड़ने की थकावट से मुँह खुल गया है। हाँपता २ दौड़ रहा है तथा आधी चाबी हुई मुँह से उगली घास से सारा रास्ता हरा कर दिया है। लम्बी लम्बी छलाँग भरते हुए ऐसा मालूम पड़ता है कि आकाश में अधिक उड़ रहा है, जमीन पर बहुत कम चलता है। अथवा जैसे—शाकुन्तल के पञ्चम अङ्क में कञ्चुकी का बुढ़ापे का वर्णन, या सप्तम अङ्क में भरत का सिंह के बच्चों के शेरनी से छीन लेने का वर्णन। इनका उदाहरण संस्कृत टीका में देखिए।

उपमास्वरूपमुपक्रमादर्शे—

उपमा—

## 'प्रस्फुटं सुन्दरं साम्यमुपमेत्यभिधीयते।'

प्रस्फुटमिति रूपकाऽऽदेर्गम्यसाम्याद्भेदाय। सुन्दरं—वैचित्र्यजनकम्। तेन 'गौरिव गवयः" इत्यत्र नायमलङ्कारः। साम्यं—सादृश्यम्। साम्यञ्च—क्रियागतं, गुणगतम्, उभयगतञ्चेति त्रिविधम्। क्रमेणोदाहरणानि। तत्र क्रियागतं यथा—

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥५७॥ [अभि० शाकु०]

अत्र "आयाति" "लङ्घ्यते" इति च क्रियाद्वयस्य उपमेये उपमाने च साम्यम्।

गुणगतं यथा—

हरस्तु किञ्चित् परिलुप्तधैर्य्यश्चन्द्रोदयाऽऽरम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥५८॥
[ कुमारस० ]

अत्र परिलुप्तधैर्य्यत्वं गुण उभयत्रापि समानः ।

उभयगतं यथा—

स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ [ उत्तरच० ]

अत्र "स्नपयति" इति क्रियासाम्यम्, "स्नेहनिष्यन्दिनी" "धवलबहलमुग्धा" इति गुणसादृश्यञ्च ।

टीका— प्रस्फुटमिति— अस्यार्थो मूल एव स्पष्टः । आदर्शे=काव्यादर्शे । क्षणादिति—जरतः जरां वृद्धत्वं प्राप्तस्य मनुष्यस्य मतिर्बुद्धिः निर्वास्यतः निर्वाणोन्मुखस्य प्रदीपस्य शिखेव क्षणात् क्षणेन प्रबोधं स्फुरणम्, आयाति प्राप्नोति, पुनश्च तमसाऽन्धकारेणेति दीपपक्षे । स्थविरपक्षे तु —अज्ञानेन विस्मरणेनेति यावत् लङ्घ्यते आक्रम्यते इत्यर्थः । पथ्यावक्त्रं वृत्तम् ॥५७॥ हर इति—कुमारसंभवे कामेन वसन्तसाहाय्येन महेश्वरमनोविकारः सम्पादित इत्याह—हरो महादेवस्तु चन्द्रोदयस्य पूर्णचन्द्रोदयस्य आरम्भेऽम्बुराशिः सागर इव किंचित् स्वल्पतमं परिलुप्तं नष्टं धैर्यं धीरता गाम्भीर्यं च यस्य तादृशः सन् नतु सर्वथैव धैर्यमुन्मुच्येति भावः । बिम्बस्य यत् फलं ( कन्दूरीति हिन्दीभाषायां प्रसिद्धं ) तद्वत् अधरोष्ठं यत्र तस्मिन् तादृशे उमायाः पार्वत्याः मुखे विलोचनानि त्रीणि नेत्राणि महेशस्य त्रिनेत्रत्वात्, व्यापारयामास व्यलोकयदित्यर्थः । चुम्बनाभिलाषेणेव साभिलाषं शोणाधरोष्ठालंकृतमाननमद्राक्षीदित्यर्थः । उपजातिवृत्तम् ॥५८॥

स्नपयतीति—"विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ॥"
इत्येष पूर्वार्धः, स्नपयतीत्यादिपद्यस्य शेषभूतो ज्ञेयः ।

तमसा सीतां परिष्वज्य ब्रूते—स्नपयतीत्यादि । ते धवला अतिनिर्मलत्वात् कनीनिकेतरनेत्रभागे पूर्णश्वेतिमयुक्ता बहला दीर्घा आयतनेत्रत्वात् यद्वा बहलमुग्धाऽतिसरला, मनोज्ञा च, स्नेहनिष्यन्दिनी प्रेमोद्गारिणी प्रणयातिशयप्रकाशिकेति

यावत्। दृष्टिः चक्षुः, दुग्धकुल्येव क्षीरनदीव, हृदयेशं जीवितनाथं भर्तारं स्नपयतीव आर्द्रयतीव आह्लादयतीवेत्यर्थः। अत्र मालिनीवृत्तम् ॥ अत्र साम्यं मूले स्पष्टम्। वस्तुतस्तु उत्प्रेक्षैवात्रोचिता। उपमानस्याप्रसिद्धत्वे उत्प्रेक्षाया विषयत्वात् तथाचोपमानं दुग्धकुल्यारूपमप्रसिद्धं तेन च रूपेण दृष्टेः सम्भावनमेवात्र सम्भवतीति। एवञ्च सति उपमाया इदमुदाहरणं बोध्यम्—

"गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥" [ कुवलयानन्दः ]

अस्यायमर्थः—ईश्वरः शङ्करः, इन्दुक्ष्वेडौ चन्द्रं विषञ्च इत्यर्थः, बुधः पण्डितः, इव गुणदोषौ, परस्य इति शेषः, गृह्णन् विचिन्वन्, पूर्वं गुणम्, इन्दुमित्यर्थः, शिरसा शिरश्चालनेनेत्यर्थः। अन्यत्र निवेशनेन, श्लाघते अभिनन्दति। अन्यत्र—तदुत्तमत्वं द्योतयति, परं दोषम्, क्ष्वेडं च कण्ठे नियच्छति निरुणद्धि, वाचा न प्रकाशयतीत्यर्थः, स्वगलदेशे एव स्थापयति, जरयतीति चार्थः। अत्र ईश्वर उपमानम्, बुध उपमेयम्, इन्दुः उपमानम्, गुण उपमेयम्, क्ष्वेड उपमानम्, दोष उपमेयञ्च। इवेति साम्यवाचकम्। गृह्णन् इत्यादिपदप्रतिपाद्यो धर्मः उभयगतश्चेति। पूर्णोपमेयम्।

**भावार्थ**—उपमा का स्वरूप काव्यादर्शकार दण्डी ने लिखा है कि स्पष्ट सुन्दर समता को उपमा कहते हैं। रूपकादि अलङ्कारों में साम्य प्रस्फुट नहीं होता किन्तु गम्य होता है। अतः "प्रस्फुटम्" इस विशेषण के देने से उन रूपकादि की व्यावृत्ति हो गई। यहाँ पर वैचित्र्यजनक होना ही सौन्दर्य है। अतएव यदि कोई नैयायिक कहे कि "गवय गौ के सदृश होता है" तो इस वाक्य में यह अलङ्कार नहीं हो सकता। साम्य तीन प्रकार से होता है—क्रियानिष्ठ, गुणनिष्ठ तथा क्रियागुण उभयनिष्ठ। क्रम से उदाहरण देते हैं। क्रियागत का उदाहरण जैसे—क्षणादिति। बूढ़े मनुष्य की बुद्धि बुझते हुए (तैलरहित) दीपक जैसी होती है। थोड़ी ही देर में सब कुछ सूझने लगता है तो थोड़ी देर बाद तम (विस्मरण) फिर हो जाता है अर्थात् वृद्ध पुरुष को अक्ल का दौरा सा पड़ता है। यदि कोई बात आज याद आ गई तो सब कुछ कह डाला, नौकरों के हुक्म भी दे दिये। पर फिर चित्त से वह बात उतर गई तो उतर गई; फिर हफ़्तों उसका ध्यान भी नहीं आता। बुझता हुआ दीपक भी ऐसा ही होता है।

उसकी लौ कभी खूब प्रकाश कर देती है तो कभी फिर कम होकर अन्धेरे से दब सी जाती है। यहाँ पर 'आयाति=आती है—प्रबोध को प्राप्त हो जाती है' इस क्रिया की तथा 'लङ्घ्यते=लाँघ दी जाती है' इन दोनों क्रियाओं का वृद्ध की बुद्धि तथा दीपकदशार्चिः (लौ) दोनों में समता है। उपमेयभूत वृद्ध की बुद्धि और उपमानभूत दीपकशिखा दोनों में इनका बराबर अन्वय होता है। गुणगत साम्य का उदाहरण जैसे—जब कामदेव ने महादेव के तीर मारा तब का यह वर्णन है—हर इति। महादेव जी का धैर्य तीर के लगते ही डामाडोल हो गया। उसी प्रकार जिस प्रकार कि चन्द्रमा के उदय होने से महासागर क्षुब्ध हो (धैर्य—धीरता) निश्चलता को छोड़ बैठता है। तथा महादेव जी ने पार्वती के कन्दूरी जैसे (बिना Lip Stick लगाए भी लाल लाल) नीचे के होठ पर अपनी निगाहों को, क्योंकि वे त्रिनेत्र हैं, डाला अर्थात् उनके मन में अधरामृत पान की वासना जागृत हो गई। यहाँ पर प्रशान्त महासागर और महादेव जो क्रमशः उपमान और उपमेय भूत हैं, दोनों में परिलुप्तधैर्यत्व=चाञ्चल्य क्षोभ रूप गुण की समता है। क्रिया गुण उभयगत साम्य का उदाहरण जैसे— स्नपयतीति। इस श्लोक का पूर्वार्ध हमने संस्कृत टीका में लिख दिया है। हे सीते! तेरी निगाह प्राणप्यारे पतिदेव को स्नान सा करा रही है अर्थात् तेरे जीवितेश्वर तेरी निगाह में स्नान सा कर रहे हैं। उनका चित्र निगाह में साफ दीख रहा है। सिर से पैर तक तू उन्हें देख रही है। जो कि तेरी निगाह दूध की नदी के समान है, स्नेह को बरसाने वाली है। दुग्धनदी भी घी पैदा करने वाली होने से स्नेहनिष्यन्दिनी होती है क्योंकि दूध से ही मावा (सं० किलाटः), दही, मक्खन निकलते हैं। तथा तेरी दृष्टि कैसी है कि धवल है, अत्यन्त निर्मल है, तथा बहल बड़ी आयत है तथा मुग्ध प्रिय है अर्थात् तेरी आँखें साफ सफेद—सुन्दर बड़ी बड़ी और प्यारी हैं। दुग्धनदी भी धवलता—सफेदी की स्वच्छता की बहलता— अधिकता से मुग्ध—सुन्दर दिखाई देने वाली होती है अर्थात् जिस दुग्ध में जल नहीं होता, उसकी श्वेतता हृदयाह्लादक होती है। इस एक ही पद्य में— 'स्नपयति' यह तो क्रिया तथा 'धवलबहलमुग्धत्व' और 'स्नेहनिष्यन्दिनीत्व' नामक गुण दोनों उपमान (दुग्धकुल्या) और उपमेय (दृष्टि) में समता है। अतः यह उभयगत उपमा का उदाहरण है।

मालोपमा—

'मालोपमा यदेकस्योपमानं बहु दृश्यते ।' [ विश्वनाथः ]

यथा—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥५६॥

[ कुमारस० ]

**टीका**—मालोपमालक्षणमाह—मालोपमेति । यदेकस्य बहु उपमानं दृश्यते सा मालोपमेत्यर्थः । **प्रभेति**—स हिमालयाख्यो नगः, प्रभया महत्या विपुलया शिखया ज्वालया उपलक्षितो दीप इव, त्रिमार्गगया त्रिपथगया भागीरथ्या त्रिदिवस्य स्वर्गस्य मार्ग इव, संस्कारवत्या व्याकरणपूतया गिरा मनीषी विपश्चिदिव तया पार्वत्या पूतः पवित्रितः शोभितश्चाभूदित्यर्थः । उपजातिवृत्तम् ॥५६॥

**भाषार्थ**—जहाँ एक उपमेय के अनेक उपमान हों, वहाँ मालोपमा होती है । जैसे—प्रभेति । अधिक प्रभा से युक्त जैसे दीपक, गङ्गा जी से युक्त जैसे स्वर्ग का मार्ग, व्याकरणरूपी संस्कार से संस्कृत वाणी से युक्त जैसे विद्वान् शोभित होता है, वैसे ही पार्वती से वह हिमालय पवित्र और शोभित था ।

रूपकम्—

'तद्रूपकमभेदो यः उपमानोपमेययोः ।' [ मम्मटः ]

उपमानं चन्द्रादि, उपमेयं मुखादि । प्रकाशितविभिन्नस्वरूपयोरपि उपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदाऽऽरोपो रूपकमित्यर्थः । यथा—

पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रबालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥६०॥

[ कुमारस० ]

अत्र लतासु वधूनां, पुष्पस्तवकाऽऽदिषु च स्तनाऽऽदीनामभेदारोपः ।

**टीका**—तदिति—तद्रूपकमुच्यते य उपमानोपमेययोरभेदः ऐक्यं भवति । यथा—**पर्याप्तेति** ।कुमारसंभवे वसन्तवर्णनमिदम् । तरवो वृक्षा अपि किमु

वक्तव्यं सचेतनाः प्राणिनः पर्याप्तानि बहूनि यानि पुष्पाणि तेषां स्तवका गुच्छा एव स्तना यासां ताभ्यस्तादृशीभ्यः स्फुरन्तः प्रवाला एव ओष्ठौ तैर्मनोहराभ्यो मनोज्ञाभ्यो लतावधूभ्यो वल्लीदारेभ्यो विनम्राः शाखा एव भुजास्तैर्बन्धनानि वेष्टनानि आलिङ्गनानीत्यर्थः, आपुर्लेभिरे । अचेतना अपि मदनविकारेण विक्रियन्ते स्म किम्पुनरन्ये तिर्यगादयः सचेतना इति भावः ॥६०॥

**भाषार्थ**—तदिति—जो कि उपमान और उपमेय का अभेद है, उसको रूपक कहते हैं। उपमान चन्द्रादि, उपमेय मुखादि। जिनका स्वरूप सुतरां भिन्न भिन्न है, ऐसे उपमान और उपमेय का अत्यन्त सादृश्य दिखलाने के लिये काल्पनिक अभेद को रूपक कहते हैं। जैसे—पर्याप्तेति। काफी फूलों के गुच्छों रूपी स्तनों वाली, शोभित मानो लाल लाल प्रबालरूपी होठों से मनोहर लगने वाली, झुकी शाखा रूपी भुजाओं से बन्धन ( आलिङ्गन ) करने वाली लता रूपी नारियों ने अपने पति स्वरूप वृक्षों से आलिङ्गनादि कामचेष्टाएँ आरम्भ कर दीं। यहाँ पर लताओं में वधुओं का, पुष्पस्तबकों में स्तनादि का अभेदारोप है। इसी प्रकार अन्य भी आरोप है।

उत्प्रेक्षा—

**'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।'** [ दण्डी ]

**प्रकृतस्य—उपमेयस्य, समेन—उपमानेन, सम्भावनञ्च—उत्कटकोटिकः संशयः; अप्रस्तुतकोटेरुत्कटत्वञ्च प्रस्तुतकोटेर्निगरणेन जायते, निगरणञ्च प्रस्तुतस्य क्वचिदनुपादानेन क्वचिदुपात्तस्याप्यधःकरणेन भवति । यदुक्तम्—**

निगीर्णत्वलक्षणम्—

**'विषयस्यानुपादानेऽप्युपादाने च सूरयः ।**
**अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥'** [ दण्डी० ]

**विषयः—प्रस्तुतम् । क्रमेणोदाहरणम्—**

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥६१॥** [ मृच्छ० ]

अत्र तमसः प्रसरसम्पाताऽऽदिरूपो विषयो नोपात्तः।

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि ! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥६२॥ [उत्तरच०]

अत्र विषयः कर उपात्तोऽपि मूर्त्तिमन्महोत्सवरूपेणाधः कृतः।

उत्प्रेक्षाबोधकशब्दाः—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' [ दण्डी ]

**टीका—सम्भावनमिति**—अथ प्रकृतस्योपमेयस्य समेन सम्भावनं तर्कणमुत्प्रेक्षा भवेदित्यर्थः। उत्प्रेक्षायां च अप्रस्तुतेनोपमानेन प्रस्तुतस्योपमेयस्य निगरणं भवति। निगीर्णत्वस्य लक्षणमाह—सूरयो विद्वांसो विषयस्योपमेयस्य, प्रस्तुतस्य प्रकृतस्येति यावत्। उपादाने शब्दतो ग्रहणेऽथवाऽग्रहणे च सति केवलमुपमेयस्य हृदिस्थस्याधःकरणमात्रेण निगीर्णत्वं प्रचक्षते वदन्तीत्यर्थः। **लिम्पतीति**—गाढान्धकारवर्णनमिदम्। तमोऽन्धकारः, अङ्गानि शरीरावयवान् लिम्पतीव उपदेग्धीव। नभोऽन्तरिक्षमञ्जनं कज्जलं वर्षतीव क्षरतीव। असत्पुरुषाणां सेवेव दास्यमिव मनुष्याणां दृष्टिर्दर्शनशक्तिर्विफलतां नैष्फल्यं गता प्राप्ता। पथ्यावक्त्रम् ॥६१॥ अत्र लिम्पतीवपदेन व्यापनमुपस्थापितं तच्च निगीर्णम्। वर्षतीवपदेन चाधःप्रसरणमुपस्थापितं तच्च न शब्दतो निर्दिष्टमिति निगीर्णमेव वर्तते। **समय** इति—हे सुमुखि ! अयं सः समयो वर्तते इव, यत्र यस्मिन् समये एष तव मूर्तिमान् शरीरी महोत्सवसदृशः करो हस्तो गौतमेन शतानन्देन पुरोधसा मम हस्तेऽर्पितः सन् आगृहीतं प्रतिमुक्तं धारितमिति यावत् कमनीयं कङ्कणं येन तादृशश्च सन् मां समनन्दयदिव समतोषयदिवेत्यर्थः। मञ्जुभाषिणी नाम वृत्तम् ॥६२॥

उत्प्रेक्षाव्यञ्जकान् शब्दान् परिगणयति **मन्ये** इत्यादिना। स्पष्टमन्यत्।

**भाषार्थ**—प्रकृत उपमेय की जहां सम=सदृश वस्तु के रूप में सम्भावना की जाय, उसका नाम उत्प्रेक्षा है। प्रकृत=उपमेय (प्रस्तुत) सम=उपमान। सम्भावना=उत्कट (प्रबल) एक कोटि (पक्ष) वाला संशय।

अप्रस्तुत ( उपमान ) की उत्कट कोटि प्रस्तुत कोटि के निगरण से होती है। तथा निगरण प्रस्तुत का कहीं उपादान ( कथन ) के बिना ही, लक्षित करने मात्र से हो जाता है तथा कहीं उसका ग्रहण करके फिर उसका विषयी ( उपमान ) द्वारा उसका निगरण कराने से होता है। जैसा कि लिखा भी है— विषयस्येति—विषय का शब्दतः ग्रहण न करने पर या करने पर दोनों प्रकार से जो ( विषय=उपमेय ) का विषयी द्वारा तिरस्कार, निगरण करना है, उसका नाम निगरण है। विषय=प्रस्तुत ( उपमेय ) क्रम से उदाहरण देते हैं—लिम्पतीति। अँधेरा अङ्गों पर चन्दन की तरह लिपटता—चिपटता जा रहा है। आकाश कज्जल को बरसाता सा है। इस समय आँख कुछ काम नहीं देती, उसी तरह निष्फल हो गई है, जैसे दुर्जन की सेवा कभी फलदायक नहीं होती। यहाँ पर अँधेरे का फैलना और आकाश से गिरना इन दोनों विषयों ( उपमेयों ) को नहीं कहा गया है किन्तु दोनों लेपन और वर्षण रूप क्रियाओं से प्रतीत होते हैं। समय इति—हे सुन्दर मुख वाली ! सीते ! इस समय मुझे वह समय दिखाई सा दे रहा है जब कि सुन्दर, कङ्कण बाँधे हुए, मूर्तिमान् महोत्सव के जैसा यह तेरा हाथ शतानन्द पुरोहित ने मेरे हाथ पर रक्खा था तथा "गृभ्णामि ते सौभगत्वाय हस्तम्" यह मन्त्र मैंने पढ़ा था, जब तेरे इस कोमल हाथ ने मुझे आह्लादित किया था। यहाँ हस्त रूपी विषय शब्दतः यद्यपि कहा गया है किन्तु उपमान मूर्तिमान् महोत्सव ने उसे तिरस्कृत कर दिया है। क्योंकि कर की महोत्सवरूपता अधिक चमत्कार-कारक है। उत्प्रेक्षा जिन शब्दों के लगने से पहचानी जाती है, वे शब्द यह हैं—मन्ये इति। मन्ये, शङ्के, ध्रुवम्, प्रायः, नूनम् और इव इत्यादि शब्दों से उत्प्रेक्षा व्यक्त होती है ( इनके पर्यायों से भी उत्प्रेक्षा का व्यञ्जन होता है, यह भी समझना चाहिए )।

अतिशयोक्तिः—

'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।' [ विश्वनाथः ]

प्रकृतस्य निगरणेनाभेदज्ञानमप्रकृतस्य अध्यवसायः। तस्य च उत्प्रेक्षायामस्तुतस्यानिश्चितत्वेन निर्देशात् साध्यत्वम्। इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वमित्यनयोर्भेदः। निगरणञ्च उभयत्रापि समानमेव। यथा—

अकालजलदाऽऽवली किरतु नाम मुक्ताऽऽवली-
रपर्वणि विधुन्तुदस्तुदतु हन्त ! शीतद्युतिम्।
इदं तु महदद्भुतं यदनपायिविद्युल्लताऽ-
वलम्बि कनकाचलद्वयमधोमुखं नृत्यति ॥६३॥
अत्र केशादेर्जलदाऽऽवल्यादिरूपेणाध्यवसानम्।

यथा वा—दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानः
वीरो रसः किमयमेत्युत दर्प एव? ॥६४॥ [उत्तरच०]

अत्र कुशस्य वीररसरूपेण दर्परूपेण चाध्यवसानम्। प्रथमे विषयः केशाऽऽदिर्नोपात्तः, द्वितीये "अयम्" इत्यनेनोपात्तोऽप्यधःकृतः।

**टीका**—अतिशयोक्तिं लक्षयति—सिद्धत्व इति। **अकालेत्यादि**—अकालजलदानां प्रावृड्ऋत्वतिरिक्तसमयोद्गतमेघानामावली राजिः मुक्तावलीः किरतु क्षिपतु पातयतु नाम नेदमद्भुतम्। अपर्वणि पूर्णिमापर्वातिरिक्तशुक्लपक्षीयतिथिषु विधुन्तुदो राहुः शीतद्युतिं चन्द्रमसं तुदतु ग्रसतु नाम नेदमप्यद्भुतम्। किन्तु इदमेतदेव महदद्भुतमाश्चर्यं यदनपायिनी स्थिरा या विद्युल्लता तडिद्रेखा तामवलम्बते इति तच्छीलं कनकाचलयोः सुवर्णगिर्योर्मेर्वोरित्यर्थः, द्वयं युगलम् अधोमुखं सत् नृत्यति गात्रविक्षेपं करोति। नृती गात्रविक्षेपे। अत्र विशेषं हिन्दीभाषायां वक्ष्यामः। स्नानोत्थिता काचिद्दर्पणपुरःस्थिता केशान् कङ्कतेन प्रसाधयतीत्यालक्ष्य कश्चिद् दूरस्थितो युवा कविरुत्प्रेक्षते इति तत्त्वम्। पृथ्वी छन्दः ॥६३॥ **दृष्टिरिति**—युद्धाय समागच्छतः कुशस्य वर्णनमिदम्। रामः कथयति—यत् अस्य बालस्य दृष्टिर्दृष्टिपातो विलोकनमित्यर्थः। तृणीकृतं जगतां लोकानां त्रयस्य त्रितयस्य सत्त्वानां प्राणिनां सारो बलोत्कर्षो यया तादृशी धीरा गम्भीरोद्धता च गतिर्धरित्रीं पृथिवीं नमयतीव नीचैः करोतीव। किंच कौमारके कुमारावस्थायामपि गिरिवत् पर्वतवत् गुरुतां वृद्धिह्रासरहितं गौरवं गाम्भीर्यं उच्चैस्त्वं च दधानो धारयन् किमयं वीरो रस एवागच्छति उताथवा दर्प एवायाति इति सन्देहदोलान्दोलनमारूढं मे मन इत्यर्थः। वसन्ततिलकं वृत्तम् ॥६४॥ गिरेरुपमानत्वं वृक्षादयो हि परिणामविशेषेण गुरुत्वं भजन्ति नैकरसेनेति द्योतनाय।

भावार्थ—अध्यवसाय यानी उत्प्रेक्षित के निश्चय के सिद्ध होने पर अतिशयोक्ति अलङ्कार होता है। प्रकृत=उपमेय को हटाकर न कहकर अप्रकृत=उपमान के तादात्म्य, अभेद के निश्चयात्मक ज्ञान को अध्यवसाय कहते हैं। यह अध्यवसाय उत्प्रेक्षालङ्कार में निश्चित यानी सिद्ध नहीं होता किन्तु निश्चेतव्य यानी साध्य होता है क्योंकि वहाँ पर अप्रस्तुत=उपमान उत्प्रेक्ष्यमाण होने से स्वयं अनिश्चित रहता है किन्तु यहाँ तो उपमान के तथ्य होने में अणुमात्र भी सन्देह नहीं होता। यही इन दोनों का अन्तर है (छात्रगण इसे याद कर लें)। हाँ, निगरण दोनों में समान है, निगीर्णता में भेद नहीं। जैसे—कोई नायिका स्नान करके अभी छत पर खड़ी हुई है। उसके बालों से पानी टपक रहा है। वह धोती बदल चुकी है। अतः कपड़े न भीग जावें, इसलिए उसने कमर झुका दी है। अब उसके दोनों स्तन भी लटक रहे हैं और जब जब वह सिर पर कंघी फेरती है तब तब वे दोनों स्तन हिलते हैं। स्त्री स्वयं पतली दुबली गोरी सुन्दरी है। इससे खड़ा युवा (मनचला—रसिक) कवि कहता है कि—अकाल में बादल आ घिरें और मोती बरसावें (यहाँ केशों को जलदावली तथा उनसे टपकती बूँदों को मोती कहा गया है), मुझे यह आश्चर्य-दायक नहीं। इतना ही नहीं, राहु का यह नियम है कि वह पूर्ण चन्द्रमा को पूर्णिमा के दिन रात में ग्रसता है पर आज उलटा ही है। पूर्णिमा का दिन नहीं है तथा रात भी नहीं है। फिर भी राहु चन्द्रमा को ग्रस रहा है, यह भी मुझे आश्चर्यप्रद नहीं लगता (यहाँ केशों को, जो मुख के चारों ओर बिखरे हुए हैं, राहु माना गया है तथा मुख को चन्द्रत्वेन अध्यवसित किया गया है) पर आश्चर्य की तो यह बात है कि बिजली चमक रही है और लगातार चमक रही है, छिपती ही नहीं तथा उस विद्युल्लता में दो मेरु पर्वत नीचे को चोटियाँ किये हुए लटक रहे हैं, नाच रहे हैं। (यहाँ उस रमणी को स्थिर विद्युल्लता कहा गया है तथा उसके अधोमुख स्तनद्वय को मेरुद्वय की उपमा दी गई है। यह अतिशयोक्ति का बहुत ही बढ़िया उदाहरण है)। यहाँ पर केशादि को जलदावली आदि रूप से अध्यवसित किया गया है। इसका ही दूसरा उदाहरण लीजिए—दृष्टिरिति। राम का पुत्र कुश युद्धार्थ आ रहा है। उसे देखकर राम की यह उक्ति है कि इसकी निगाह ऐसी गम्भीर है कि उसके सामने तीनों लोक तुच्छ हैं। इसकी गति ऐसी है कि पृथ्वी को पैरों से नमाता सा हुआ आ रहा है। इस कुमारावस्था में पर्वतों जैसी गम्भीरता

और गौरव इसमें है। ऐसा मालूम होता है मानो साक्षात् वीर रस ही आ रहा हो या दर्प का कोई नवीन अवतार हो । यहाँ पर कुश को वीररस के स्वरूप में तथा दर्प के स्वरूप में अध्यवसान किया गया है । पहले श्लोक में विषय=उपमेय जो केशादि हैं, उनका उपादान नहीं किया गया। तथा इस दूसरे पद्य में 'अयम्' पद से विषय यद्यपि गृहीत है पर 'वीरो रसः' 'दर्प एव' इन आरोपित उपमानों से सुतरां तिरस्कृत कर दिया गया है।

अतिशयोक्तिभेदाः—

'प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ।
कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः ।
विज्ञेयाऽतिशयोक्तिः सा'ऽप्यन्यैव प्रथमोक्ततः ॥ [मम्मटः]

क्रमेणोदाहरणम्—

अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः ।
तस्याः पद्मपलाशाद्याः सरसत्वमलौकिकम् ॥६५॥

यदिशब्देन, तत्पर्यायान्तरेण वा यद्यर्थस्य कथनेऽसम्भविनोऽर्थस्य कल्पनमित्यर्थः । यथा—

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्य्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥६६॥ [कुमारस०]

कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्च द्विधा भवति, कारणात् पूर्वं कार्यस्य भावे, द्वयोः समकालत्वे च । क्रमेण यथा—

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥६७॥ [अभि० शाकु०]

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहाऽऽसनं पित्र्यमखिलञ्चारिमण्डलम् ॥६८॥ [रघु०]

**टीका**—अत्रेदं बोध्यम्—"मम्मटमते चतुर्विधाऽतिशयोक्तिर्भवति । तत्र प्रथमविधां विश्वनाथोऽपि मन्यते । मम्मटाचार्यविश्वनाथयोश्च प्रथमविधातिशयोक्तिलक्षणं समानमिति प्रथमातिशयोक्तिमुक्त्वा अवशिष्टभेदत्रयं मम्मटमतेनाह। यद्यपि पञ्चविधत्वमतिशयोक्तेर्विश्वनाथोऽपि 'भेदेऽप्यभेदः' इत्यादिना मन्यते तथापि तत् स्वतन्त्रेच्छेन संकलयित्रोपेक्षितम् । मम्मटमते प्रथमविधातिशयोक्तिलक्षणं तु—'निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्' इति ग्रन्थेनोक्तं तत्रैव द्रष्टव्यम् ।" प्रकृतमनुसरामः—प्रस्तुतस्येति । प्रस्तुतस्य=प्रकृतस्योपमेयस्य यदन्यत्वमन्यप्रकारेण (अन्यशब्देनेति स्पष्टतरोऽर्थः) वर्णनं सा द्वितीयातिशयोक्तिः । यदि शब्दार्थस्योक्तौ वचने सति कल्पनम् (असम्भविनोऽर्थस्येति शेषः), इयं तृतीयातिशयोक्तिः । यश्च कार्यकारणयोः पौर्वापर्यस्य पूर्वं कारणं भवति पश्चात्त्वकार्यमिति कार्यकारणयोः पौर्वापर्यं तस्य विपर्ययः द्वयोरपि समानकालिकत्वविपर्यासादिरूपेण वर्णनं सा चतुर्थी अतिशयोक्तिरिति कारिकार्थः ।

**अन्यदेवेति**—तस्याः पद्मस्य पलाशं दलं तद् दक्षिणीयस्यास्तस्या रमण्या अङ्गानां लावण्यं सुषमा । यदुक्तम्—

'मुक्ताफलेषुच्छायायाः सरसत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इति ।

अन्यदेवानिर्वचनीयमेव । एवं तस्याः सौरभसम्पदः नैसर्गिकशारीरिकपरिमलसम्पत्तिरन्या एव विलक्षणा एव, तादृग्गन्धः क्वाप्यन्याङ्गनासु न दृश्यते । एवं तस्याः सरसत्वं सहृदयत्वमलौकिकं लोकोत्तरमेव । तथा च सा दिव्यैवेति भावः । पथ्यावक्त्रं छन्दः ॥६५॥ अत्र प्रस्तुतायाः पद्मपलाशाद्या अन्यशब्देन वर्णनादितरस्त्रीसमाजातिशायिनी सेति स्फुटं वचनादतिशयोक्तिः । **पुष्पमिति**—पार्वतीस्मितवर्णनमिदम् । यदि पुष्पं प्रवालैरुपहितमाच्छादितं स्यात्, यदि वा मुक्ताफलं मौक्तिकं विकसितविद्रुमदले स्थापितं भवेत् । तर्हि ताम्रौ रक्तवर्णौ यावोष्ठौ तयोः पर्यस्ता क्षिप्ता रुचिर्दीप्तिर्यस्य तादृशस्य तस्याः स्मितस्यानुकुर्यात् अनुकरणं विदध्यात् । उपजातिवृत्तम् । एवं च स्मितं निरुपममिति फलत्यतिशयोक्तिः ॥६६॥ **उदेतीति**—पूर्वं प्रथमं कुसुमं पुष्पमुदेति समुद्भवति ततः फलमुदेति । एवमेव प्राक् घनानां मेघानाम्, उदय उद्गमो भवति ततः पयो वर्षति । निमित्तस्य कारणस्य नैमित्तिकस्य कार्यस्य चायं क्रमः पर्यायो विद्यते किन्तु तव प्रसादस्य पुरः तव प्रसन्नतायाः प्राक् सम्पदो धनान्यैश्वर्याणि समुद्भवन्तीत्यर्थः । वंशस्थबिलं वृत्तम्॥६७॥ एवं कार्यकारणयोः

समकालिकत्वेऽपि इयं चतुर्थविधातिशयोक्तिर्भवतीत्याह—**सममेवेति** । द्विरदस्येव गच्छतीति तच्छीलेन तेन रघुणा द्वयं सममेव युगपदेव समाक्रान्तमभिभूतम् । किं किमित्याह—पित्र्यं पितृसम्बन्धि सिंहासनम्, अखिलं सम्पूर्णं चारिमण्डलं शत्रुवर्ग इति । अनुष्टुप् ॥६८॥ अत्र राज्याधिरोहणानन्तरभाविशत्रुविजयस्य समकालिकत्वेन वर्णनादियमतिशयोक्तिरिति ।

**भावार्थ**—यहाँ संस्कृत टीका करते समय जो प्रारम्भ में हमने लिखा है, उसे प्रथम पढ़ लीजिए । तब विषय स्पष्ट हो जायगा । प्रस्तुतस्येति—द्वितीय प्रकार की अतिशयोक्ति का लक्षण करते हैं—प्रस्तुत= उपमेय का जो 'अन्य' शब्द के या अन्यार्थ को लेकर वर्णन करना है, वह अतिशयोक्ति का दूसरा प्रकार है । यदि शब्दार्थ के कहने पर जो असंभाव्य अर्थ की कल्पना करनी है, यह तीसरा प्रकार है । कार्य कारण के क्रम को उलट देना या दोनों का साथ ही ( युगपत् ) कथन करना चतुर्थ प्रकार है । क्रम से उदाहरण देते हैं—अन्यदेवेति । उस कमलनयना के अङ्गों की सुन्दरता वर्णनातीत थी । उसके शरीर की परिमर्दोत्थ या स्वाभाविक गन्ध के क्या ही कहने हैं ! उसके प्रत्येक कार्य में, वाणी में, उठ बैठ में अलौकिक सरसता—रसपूर्णता थी । यदि शब्द से या 'यदि' के पर्याय 'चेत्' आदि से यदि पद के अर्थ के कहने पर असम्भाव्य अर्थ की कल्पना करना, यह तीसरे प्रकार की अतिशयोक्ति है । जैसे—पुष्पमिति । अगर पुण्डरीकादि पुष्प किसलय पर नवोद्गत लाल लाल पत्तों में खिला हो या उससे उपहित ( ढका ) हो । या सफेद मोती, मूँगों की लता में लगा करें, तो उसके लाल होठों पर पड़ी सफेद मुसकराहट की उपमा शायद दी जा सके । कार्य कारण के पौर्वापर्य का विपर्यय दो तरह हो सकता है—या तो कारण से पहले कार्य तशरीफ ले आवें या कारण के साथ ही साथ ( कार्य ) रहें । क्रमशः दोनों का उदाहरण देते हैं । जैसे—उदेतीति । पहले फूल आता है, फिर फल । पहले बादल उमड़ता है, फिर वर्षा होती है । इस प्रकार कार्य कारणों का यह नियम है । पर यह नियम आपके प्रसाद ( कारण ) और सम्पत्ति ( कार्य ) में नहीं दिखाई देता, तोड़ना पड़ता है । आपकी कृपा से पूर्व सम्पत्तियों की कृपा हो जाती है । आपकी जिस पर कृपा करने की इच्छा होती है कि सम्पत्तियाँ पहले से ही उसे घेर लेती हैं । वे जानती

हैं कि हमें चलना तो है ही, चलो पहले ही जा पहुँचें। सममेवेति—हाथी के समान चाल वाले रघु ने पिता के राजकार्य (सिंहासन) तथा शत्रुगणों को एक दम ही वश में कर लिया। सिंहासन सम्हालते ही सब शत्रुओं ने तिनका मुँह में रख लिया, वे शरणागत हो गये, यह भाव है।

व्यतिरेकः—

'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः।' [मम्मटः]

अन्यस्य—उपमेयस्य, व्यतिरेकः—आधिक्यम्, स एव व्यतिरेकालङ्कारः। यथा—

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माऽऽश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥६९॥ [कुमारस०]

अत्र उपमानभूतचन्द्रपद्मापेक्षया उपमेयस्य उमामुखस्य अधिकगुणवत्त्वकथनम्। यथा वा—

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥७०॥ [रघु०]

अत्र उपमानभूतात् सूर्य्यादपि रघोः प्रतापातिशयवर्णनम्।

**टीका**—उपमानापेक्षया अन्यस्य उपमेयस्य यत् यः व्यतिरेको गुणोत्कर्षकृतमाधिक्यं स स एव व्यतिरेकाख्योऽलङ्कार एव। उदाहरणमाह—**चन्द्रमिति**। पार्वतीमुखं वर्णयति कविः—लोला चपला लक्ष्मीः चन्द्रं गता चन्द्रं समाश्रिता भवन्ती पद्मगुणान् पद्मस्य गुणान् सुरभित्वादीन् न भुङ्क्ते न लभते। पद्माश्रिता च लक्ष्मीश्चान्द्रमसीम्, अभिख्यां सुषमां सौन्दर्यं न स्वदितुं लभते। भगवता कृपया द्वयमपीदं साधितम्, यल्लक्ष्म्यै तादृशमायतनं प्रदत्तं यत्र द्वयमपीदं सुलभमासीत्। तदेवाह—उमायाः पार्वत्याः मुखमाननं प्रतिपद्य लब्ध्वा लक्ष्मीः द्विसंश्रयां द्विनिष्ठां प्रीतिं प्रेमाणम्, अवाप लेभे। पार्वत्या मुखं पद्मसुगन्धिजुष्टं चन्द्रवदाह्लादकञ्चाभूदिति, यद्वा मुखं चन्द्रवत्, तद्वर्ति नेत्रद्वयं लीलाम्बुजद्वयवदभूदिति वा भावः। उपजातिवृत्तम् ॥६९॥ **दिशीति**—इदमनुष्टुप् वृत्तम्। दक्षिणस्यां दिशि रवेरपि

तेजो मन्दायते मन्दीभवति सूर्यस्य दक्षिणायनत्वात् । तस्यामेव दिशि पाण्ड्याः पाण्डूनां देशानां राजानः क्षत्रियाः रघोः प्रतापं प्रभावं न विषेहिरे सोढुं न शेकुः ॥७०॥ अत्रेदं बोध्यम्—'दिशि' इति पद्यमुपमेयाधिक्ये व्यतिरेकालङ्कारस्योदाहरणम् । केचित्तु उपमेयापेक्षयोपमानाऽऽधिक्येऽपि व्यतिरेकमाहुः । तदुक्तं साहित्यदर्पणकारैः—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा" इति । पण्डितराजोऽपि—"द्वयोरेकस्य न्यूनत्वमाधिक्यं वा भवेत् यदि । व्यतिरेक इति प्रोक्तः" इति । एतन्मते—"हनूमदाद्यैर्यशसा मया पुनः द्विषां हसैर्दूतपथः सितीकृतः" इत्युदाहरणम् । अस्यार्थः—दमयन्तीं प्रति दूतरूपेण देवताभिः प्रेषितस्य नलस्य तत्प्रयोजनासिद्धौ विषादोक्तिरियम् । हनूमदाद्यैः हनूमत्प्रमुखैः, दूतपथः यशसा सितीकृतः उज्ज्वलीकृतः । मया पुनः द्विषां शत्रूणाम्, हसैः हास्यैः, दूतपथः सितीकृतः । मां दौत्ये अकृतकार्य्यं दृष्ट्वा शत्रवो नूनं हसिष्यन्ति, तेषां हास्यसितिम्ना च स एव दूतमार्गो धवलो भविष्यतीति भावः । यशसो हासस्य च धावल्यं कविसमयप्रसिद्धमेव "यशसि धवलता वर्ण्यते हासकीर्त्योः" इत्युक्तेः । एतेन प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वम्, तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वञ्च प्रतीयते । इह दूतयोरुपमानोपमेयभावविवक्षणेऽपि उपमानस्यैवाऽऽधिक्यम्, न तु उपमेयस्य इति ।

**भावार्थ**—उपमानादिति—उपमान की अपेक्षा अन्य उपमेय का व्यतिरेक गुणोत्कर्षकृत उत्कृष्टता का वर्णन है, उसे व्यतिरेक कहते हैं । अन्य= उपमेय । व्यतिरेक=आधिक्य या उत्कृष्टता । स एव=व्यतिरेकालङ्कार ही है । जैसे—चन्द्र में आश्रय लेने पर पद्म के सौगन्ध्यादि गुणों को लक्ष्मी ग्रहण नहीं कर पाती और जो सुगन्धि के लिये पद्म का आश्रय लेती है तो चन्द्रमा के गुणों ( आह्लादकत्व आदि ) से वञ्चित रहती है । अतः लक्ष्मी ने ऐसा आश्रय पकड़ लिया, जहाँ दोनों वस्तुएँ थीं और वह था पार्वती का मुख । उसको प्राप्त कर चपल भी लक्ष्मी दोनों का आनन्द लेती थी । अर्थात् पार्वती का मुख चन्द्रमा के समान सुन्दर और पद्मसमान सुगन्धित था । पद्म और चन्द्रमा दोनों की अपेक्षा वह उत्कृष्ट—अधिक गुण वाला था, यह भाव है । अथवा—जिस दक्षिण दिशा में सूर्य का तेज भी मन्द पड़ जाता है, उस ही दिशा में पाण्ड्य देश के राजाओं ने रघु के प्रताप को सहन न किया अर्थात् दक्षिण देश के विजयार्थ जाने पर भी रघु का प्रताप मन्द

नहीं हुआ किन्तु वह इतना उग्र था कि दाक्षिणात्य राजा उसे सहन न कर सके। सूर्य के प्रताप से भी रघु का प्रताप उग्र था, यह भाव है। इस प्रकार इस पद्य में उपमानभूत सूर्य से भी रघु के प्रताप का अतिशय वर्णित है।

प्रतिवस्तूपमा—

'प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।
एकोऽपि धर्म्मः सामान्यो यत्र निर्दिश्यते पृथक्' ॥

[ विश्वनाथः ]

प्रतीयमानसादृश्ययोर्वाक्ययोरेकस्यापि धर्म्मस्य पौनरुक्त्य-भिया शब्दान्तरेण निर्देशः प्रतिवस्तूपमा। यथा—

मधुश्च ते मन्मथ ! साहचर्य्यादसावनुक्तोऽपि सहाय एव।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ? ॥७१॥

[ कुमारस० ]

अत्र अनुक्तस्यापि सहजसहायस्य स्वत एव साहाय्य-सम्पादने प्रवृत्तिरित्येक एवार्थः शब्दान्तरेण निर्दिष्टः।

यथा वा—

धन्याऽसि वैदर्भि ! गुणैरुदारै-
यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकायाः
यदब्धिमप्युत्तरलीकरोति ? ॥७२॥ [ नैषधच० ]

अत्र समाकर्षणरूप एक एव धर्मः भङ्ग्यन्तरेण पृथङ्-निर्दिष्टः।

**टीका**—सा प्रतिवस्तूपमा स्याद्यत्र द्वयोर्गम्यं प्रतीयमानं न तु शब्दत उच्यमानं साम्यं ययोस्तयोस्तादृशयोर्वाक्ययोर्वाक्यार्थयोर्धर्मः ( निष्ठत्वं सप्तम्यर्थ-स्तेन वाक्यार्थनिष्ठो धर्म इत्यर्थः फलितः ) पृथक् पर्यायान्तरेण पृथक् पृथक् निर्दि-श्यते उच्यते प्रतिपाद्यते इत्यर्थः। वस्तु वस्तु प्रति इति प्रतिवस्तु। प्रतिवस्तु उपमा औपम्यं यत्र सा प्रतिवस्तूपमेति विग्रहः। उदाहरणमाह—**मधुरिति**। हे मन्मथ ! मनो मथ्नातीति मन्मथः कामस्तत्सम्बुद्धौ हे मन्मथ ! मनसिज ! असौ

मधुर्वसन्तश्चानुक्तोऽपि साहाय्यकरणायाऽचोदितोऽपि सहाय एवानुचर एव । यतः समीरणो वायुस्त्वं हुताशनस्याग्नेर्नोदयिता प्रेरयिता भव जायस्वेति केन व्यादिश्यते नियुज्यते प्रेर्यते । न केनापीत्यर्थः । उपजातिः ॥७१॥ उदाहरणान्तरमाह—**धन्येति।** हे वैदर्भि ! दमयन्ति ! त्वमुदारैर्गुणैर्धन्याऽसि भवसि, यया त्वया नैषधो निषधाधिपतिर्नलोऽपि समाकृष्यताकृष्टः । इतोऽधिका चन्द्रिकायाः ज्योत्स्नायाः का स्तुतिर्यत्साऽब्धिं समुद्रमप्युत्तरलीकरोति चपलयति । पूर्णिमादिने चन्द्रिकाप्रतिफलनेन सिन्धुरुद्वेलतां गच्छतीति वस्तुस्थितिः । उपजातिवृत्तम् ॥७२॥

**भावार्थ**—प्रतिवस्तूपमा का लक्षण करते हैं—प्रतिवस्तूपमा वह कही जाती है, जहाँ जिन दो वाक्यार्थों का साम्य=सादृश्य गम्य हो, प्रतीयमान हो, शब्दों द्वारा न कहा गया हो । किन्तु उनमें रहने वाला एक ही सामान्य धर्म पृथक्=शब्दान्तरों द्वारा निर्दिष्ट किया जावे, वहाँ प्रतिवस्तूपमा होती है । एक ही धर्म को शब्दान्तरों में कहना वस्तु प्रतिवस्तुभाव कहलाता है । वह यहाँ अनिवार्य रूप से रहता है । अर्थात् प्रतीयमान सादृश्य वाले वाक्यों में कहे गये एक ही सामान्य धर्म को पुनरुक्ति के डर से भिन्न भिन्न शब्दों में कहना प्रतिवस्तूपमा अलङ्कार है । जैसे—मधुरिति । देवराज कह रहे हैं—हे कामदेव ! वसन्त तो तुम्हारा पक्का दोस्त है—सहचारी है । अतः यदि मैं ( इन्द्र ) उससे तुम्हारा साथ देने को न भी कहूँ तो भी वह सहायक रहेगा ही । भला, हवा से यह बात कौन कहता है कि तू आग की मदद कर । यहाँ एक ही 'न कहने पर भी स्वाभाविक मित्र ( या सहायक ) सहायता करता ही है' यह अर्थ शब्दान्तरों में कहा गया है । अथवा जैसे—धन्येति । हे दमयन्ती ! तू धन्य है, जिस तूने अपने उदार गुणों से निषधाधिप राजा नल को अपने गुणों से खींच लिया । इससे अधिक चाँदनी की और क्या स्तुति होगी कि वह समुद्र ( जो गम्भीरता में प्रसिद्ध है ) को भी चञ्चल, उथल पुथल कर देती है । यहाँ समाकर्षण रूपी एक ही धर्म प्रकारान्तर से निर्देश किया गया है ।

निदर्शना—

**'अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।'**
**निदर्शना भवेत् सेयं मम्मटेन यथोदिता ।**

**उपमापरिकल्पकः—पर्य्यवसाने साम्यबोधकः। यथा—**

**क सूर्य्यप्रभवो वंशः ? क चाल्पविषया मतिः ?।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥७३॥ [रघु०]**

**अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिव इत्युपमायां पर्य्यवस्यति। यथा वा—**

**अभ्युन्नतांगुष्ठनखप्रभाभिर्निक्षेपणात् रागमिवोद्गिरन्तौ।**
**आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥७४॥**
**[कुमारस०]**

**अत्र उपमाधर्म्मस्य अरविन्दश्रियश्चरणयोरुपमेयभूतयोः असम्भवादरविन्दश्रियमिव श्रियमित्युपमायां पर्य्यवसानम्।**

**टीका**—अभवन् अनुपपद्यमानो वस्तुनोः वाक्यार्थयोः सम्बन्धः अन्ततोगत्वोपमापरिकल्पकः औपम्यमाक्षिपति यदि तर्हि सा निदर्शना भवेत्। इयं च निदर्शना मम्मटेनाचार्येणोदितैवं लक्षिता। एतल्लक्षणं काव्यप्रकाशकृतोक्तमित्यर्थः। इदं मनसि करणीयम्—परस्परं धर्मविशेषसाम्याभावेन निरपेक्षयोर्वाक्यार्थयोर्बिम्बप्रतिबिम्बभावे वक्ष्यमाणोऽनुपदमेव दृष्टान्तालङ्कारः। अत्र तु वाक्यार्थयोः साकांक्षता साधारणधर्मस्यानुपादानञ्चेति भेदः। प्रतिवस्तूपमायां तु साधारणधर्मस्यैव वस्तुप्रतिवस्तुभावेन निर्देश इति। उदाहरणमाह—क्वेति। सूर्यप्रभवः सूर्यात् प्रभव उत्पत्तिर्यस्य स तादृशो वंशः रघुकुलं क ? अतिमहान् इत्यर्थः। अल्पः स्वल्पो विषयो यस्याः साऽल्पविषया मतिश्च क्व ? सातिलघीयसीत्यर्थः। एवंरूपायां वस्तुस्थितौ सत्यामपि अहं मोहादज्ञानादुडुपेन प्लवेन स्वल्पनौकया सागरं तितीर्षुस्तरीतुमिच्छुरस्मि। अनुष्टुप् ॥७३॥ **अभ्युन्नते**ति—पार्वतीचरणवर्णनमिदम्। अभ्युन्नतौ यावंगुष्ठौ तयोर्यौ नखौ तयोः प्रभाभिः कान्तिभिः रागमिव लौहित्यमिव निक्षेपणाद्भुविन्यसनाद् उद्गिरन्तौ बहिर्निःस्सारयन्तौ तच्चरणौ तस्याः पार्वत्याश्चरणौ पृथिव्यां भुवि स्थलारविन्दानां स्थलकमलानामव्यवस्थामनिश्चलां श्रियमाजह्रतुराचकृषतुः प्रापतुरित्यर्थः। उपजातिर्नाम छन्दः ॥७४॥

**भाषार्थ**—जहां दो वाक्यार्थों का सम्बन्ध उत्पन्न न होता हुआ उपमा का परिकल्पक=आक्षेपक हो, उसका नाम निदर्शना है। यह लक्षण काव्यप्रकाशकार मम्मटाचार्य ने किया है। उपमापरिकल्पक=अन्त में साम्य

का बोधक। जैसे—क्वेति। सूर्य से निकला हुआ खानदान अर्थात् सूर्यवंश बड़ा महान् है। मेरी थोड़ी ग्रहण करने वाली बुद्धि कहाँ है। मैं दुस्तर सागर को अपनी मूर्खता से डोंगी के सहारे ही पार करना चाहता हूँ। 'यहाँ मेरी बुद्धि से सूर्यवंश का वर्णन करना वैसा ही कठिन है जैसे डोंगी से समुद्र का पार करना' इस उपमा में दोनों वाक्यार्थों का पर्यवसान होता है। दूसरा उदाहरण—पार्वती के चरणकमल जमीन पर रखने से आस पास से ऐसे लाल हो जाते थे कि वे लाल रंग सा टपकाने लगते थे तथा जमीन पर जब पड़ते थे तब ऐसे मालूम होते थे मानो चलने फिरने वाले स्थलकमल हों। यहाँ पर स्थलारविन्दश्री चरणों में नहीं रह सकती, वह तो स्थलारविन्दों में ही रहेगी। अतः पैरों की शोभा कमलशोभा जैसी थी, इस उपमा में पर्यवसान होता है।

दृष्टान्तः—

'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।' [ विश्व० ]

सधर्म्मस्य—समानधर्म्मस्य, वस्तुनः—विषयस्य, प्रतिबिम्बनम्—प्रणिधानेन गम्यसाम्यत्वम्। प्रतिवस्तूपमायामेकस्यैव धर्मस्य भङ्ग्यन्तरेण निर्देशः, इत्यस्माद्भेदः। यथा—

नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥७५॥ [ माघः ]

**टीका**—दृष्टान्त इति। समानो धर्मो यस्य तस्य सधर्मस्य वस्तुनः प्रतिबिम्बनं दृष्टान्तः। द्वयोर्वाक्यार्थयोर्धर्मसहितस्य वस्तुनः प्रतिबिम्बनं दृष्टान्त इत्यर्थः। दृष्टान्ते धर्मसहितस्य धर्मिणः प्रतिबिम्बनं भवति। प्रतिवस्तूपमायां धर्मस्यैव विभिन्नशब्दैर्निर्देशेऽन्योन्यं बिम्बप्रतिबिम्बभाव इति भेदः। प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य बिम्बप्रतिबिम्बभावो दृष्टान्त इत्यर्थः।

सधर्म्मस्येत्यस्य स्थाने सधर्म्मणः [ अत्र "धर्म्मादनिच् केवलात्" ] ( ५। ४। १२४ पा० ) इत्यनिचः प्राप्तावपि तदकरणं 'समासविधेः अनित्यत्वात्' इति, यद्वा 'निरङ्कुशा हि कवयः' इति। **नेति**—श्रीकृष्ण एतल्लघ्वपि वचो भूयस्या बहुलया वाचा नातिशय्यते नातिक्रम्यते। इन्धनौघं काष्ठसमूहं दहतीति तादृशोऽग्निस्त्विषा दीप्त्या पूषणं भानुं नात्येति नातिक्राम्यति। अनुष्टुप् ॥७५॥ अत्रेदं बोध्यम्—

'समानधर्मबिम्बितया दृष्टान्तालङ्कारः' इति मल्लिनाथमतमनुसृत्य ग्रन्थकृता दृष्टान्तालङ्कार उक्तः। वस्तुतस्तु—एकस्यैव धर्मस्य अतिक्रमरूपस्य गम्यसाम्ययोः वाक्ययोः पर्य्यायान्तरेण पृथक्तया निर्देशात् प्रतिवस्तूपमैवेति बोध्यम्। दृष्टान्तोदाहरणन्तु—

अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला॥ इति।

अस्यार्थः—सतां कवीनां भणितिः वाणी, अविदितगुणा अपि अर्थबोधविरहादिति भावः, कर्णेषु मधुधारां वमति उद्गिरति, माधुर्य्याऽऽदिगुणसम्पत्तेरिति तात्पर्य्यम्। मालतीमाला अनधिगतः अनाघ्रातः परिमलो यस्याः तादृशी अपि, दृशं नेत्रम्, हरति आकर्षति; सौन्दर्य्यातिशयादिति भावः। अत्र मधुधारावमनस्य नेत्रहरणस्य च नैकरूपत्वम्, परं प्रणिधानेन गम्यसाम्यत्वमस्तीति द्रष्टव्यम्। आर्यावृत्तमिदम्। मूले सधर्मस्येत्यस्य समानधर्मस्येति व्याख्यानमयुक्तम्। समानधर्मसहितस्येति युक्तम्। इति।

**भाषार्थ**—समान धर्मों के सहित दो या अधिक धर्मियों का परस्पर बिम्ब प्रतिबिम्बभाव का नाम दृष्टान्त है। सधर्मस्य=समान धर्म वाले, वस्तुनः=विषय का प्रतिबिम्बन बड़े ध्यान से मन एकाग्र करके साम्य की प्रतीति होना। जैसे—नेति। कृष्ण भगवान् का यह थोड़ा सा भी वक्तव्य लम्बे लम्बे व्याख्यानों से तिरस्कृत नहीं हो सकता। ईंधनों के ढेरों को स्वाहा करने वाली आग क्या सूर्य से बढ़कर हो सकती है, कदापि नहीं।

अर्थान्तरन्यासः—

**'सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥'** [मम्मटः]

**साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण, विशेषो वा सामान्येन यत् समर्थ्यते—सोपपत्तिकतया दृढः क्रियते, सोऽर्थान्तरन्यासः। समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावे अर्थान्तरन्यासः। दृष्टान्तस्तु न तथा; इत्यनयोर्भेदः।**

**सामान्यं विशेषेण यथा—**

**बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति।**
**सम्भूयाम्भोधिमभ्येति महानद्या नगाऽऽपगा॥७८॥** [माघः]

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन पूर्वार्द्धगतः सामान्योऽर्थः समर्थ्यते ।

विशेषः सामान्येन यथा—

यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥७७॥ [माघः]

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थः समर्थ्यते ।

वैधर्म्येण यथा—

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥७८॥ [कुमारस०]

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थो वैधर्म्येण समर्थ्यते ।

**टीका**—यत्र साधर्म्येणेतरेण वैधर्म्येण वा यत्सामान्यं विशेषेण समर्थ्यते विशेषो वा सामान्येन समर्थ्यते सोऽर्थान्तरन्यास इत्यर्थः । दृष्टान्तप्रतिवस्तूपमयोस्तु सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यते इति ताभ्यामस्य भेदः । काव्यलिङ्गे तु न सामान्यविशेषभाव इति ततोऽपि भेद इति । यथा—**बृहदिति** । चोदीयानपि स्वल्पतरोऽपि बृहत्सहायः महापुरुषादिसाहाय्यवान् भवन् कार्यान्तं प्रारब्धस्य परिसमाप्तिं गच्छति प्राप्नोति । यथा महानद्या सम्भूय मिलित्वा नगाऽऽपगा क्षुद्रवार्षिकनदी अम्भोधिं समुद्रम् अभ्येति प्राप्नोति इत्यर्थः । अनुष्टुप् ॥७६॥ **यावदिति**—माधवः श्रीकृष्णः एवमुक्तप्रकारेण यावन्तोऽर्था इति यावदर्थम्, साकल्येऽव्ययीभावः । यावदर्थं पदानि यस्यां तां यावदर्थपदां वाचमादायोक्त्वेत्यर्थः । विरराम मौनमभजत् । यतः महीयांसो महान्तः पुरुषाः प्रकृत्या स्वभावेनैव मितभाषिणः परिमितवागुच्चारणशीला भवन्ति । अनुष्टुप् ॥७७॥ **इत्थमिति**—इत्थमनेन प्रकारेण आराध्यमानोऽपि सेव्यमानोऽपि भुवनत्रयं त्रिलोकीं ( स तारकासुर इति शेषः ) क्लिश्नाति पीडयति । दुर्जनः प्रत्यपकारेणापकारस्यापकारेण प्रतिक्रियायां सत्यां शाम्येदुपकारेण नेत्यर्थः । अनुष्टुप् ॥७८॥

**भाषार्थ**—सामान्यमिति—जहाँ पर साधर्म्य या वैधर्म्य के द्वारा सामान्य विशेष से या विशेष सामान्य से समर्थित किया जाता है, वह अर्थान्तर-

न्यास कहलाता है । साधर्म्य या वैधर्म्य से सामान्य विशेष से या विशेष सामान्य से समर्थित हो, उपपत्तियों के द्वारा दृढ किया जाय, उसका नाम अर्थान्तरन्यास है । दृष्टान्त (और प्रतिवस्तूपमा) में तदन्य से समर्थन नहीं होता किन्तु तत्समान से (जैसे विशेष का विशेष से) ही होता है, यह इन दोनों में भेद है। अन्य भेद के कारण हम उक्त तीनों को संस्कृत टीका में सविशद लिख चुके हैं, वहीं देखिए । सामान्य का विशेष से समर्थन— साधर्म्य द्वारा जैसे—बड़े के सहारे से छोटा भी कठिनाइयों या प्रारब्ध कार्यों की समाप्ति कर डालता है, बड़ी नदी से मिलकर जिस प्रकार छोटी नदियाँ समुद्र में जा मिलती हैं। यहाँ पर उत्तरार्द्धवर्ती विशेष अर्थ से पूर्वार्धवर्ती सामान्य अर्थ समर्थित किया जाता है। साधर्म्य से विशेष का सामान्य द्वारा समर्थन जैसे—यावदिति । इस प्रकार सार्थक परिमित पदों वाली वाणी बोलकर श्रीकृष्ण भगवान् चुप हो रहे। बड़े आदमी स्वभावतः मितभाषी होते हैं। यहाँ पर द्वितीयार्धगत सामान्य अर्थ से पूर्वार्धगत विशेष अर्थ समर्थित होता है। वैधर्म्य से सामान्य द्वारा विशेष का समर्थन। जैसे— इत्थमिति—इस प्रकार आराधित हुआ—सेवा किया भी तारकासुर तीनों लोकों को कष्ट देता है। दुर्जन पुरुष प्रत्यपकार से शान्त हो सकता है, उपकारों से नहीं। यहाँ पर उत्तरार्द्धगत सामान्य अर्थ से पद्य के पूर्वार्द्धगत विशेष अर्थ का पोषण (समर्थन) होता है। वैधर्म्य निषेध रूप अर्थ से स्पष्ट है।

तुल्ययोगिता—

'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥'

[ विश्वनाथः ]

केवलं प्रस्तुतानामप्रस्तुतानां वा एकधर्मसम्बन्धः तुल्ययोगिता । यथा—

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥७६॥ [ कुमारस० ]

अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वम्, तेषां दोहनक्रियारूपैकसमानधर्मसम्बन्धात् औपम्यस्य गम्यत्वात् केवलप्राकरणिकविषयोऽयमलङ्कारः।

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः।
लब्ध्वाऽपि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानबाह्याः ॥८०॥ [ कुमारस० ]

अत्र नागेन्द्रहस्तानां कदलीविशेषाणाञ्च द्वयानामप्यप्रस्तुतानां परिणाहिरूपलाभक्रियायाः समानधर्मस्य सम्बन्धात् केवलाप्राकरणिकविषयकमिदमुदाहरणम्।

**टीका**—यदा केवलं प्रस्तुतानां पदार्थानामेकधर्माभिसम्बन्धः स्याद्यद्वा केवलमप्रस्तुतानां पदार्थानामेकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता भवेदित्यर्थः।

**यमिति**—यं हिमालयं वत्सं परिकल्प्य कल्पयित्वा, दोहे दोहनक्रियायां दक्षे कुशले मेरौ सुमेरौ दोग्धरि स्थिते वर्तमाने सति, पृथूपदिष्टां पृथुराज्ञा निर्दिष्टां धरित्रीं भास्वन्ति रत्नानि दुदुहुर्महौषधींश्च दुदुहुः। भूतधात्र्याः गोरूपत्वे महौषधीनां दुग्धरूपत्वे मानन्तु—"गौर्भूत्वा तु वसुन्धरा" इति "ताः क्षीरपरिणामिनीः" इति च विष्णुपुराणवचनमेव। उपजातिवृत्तम् ॥७९॥

**नागेन्द्रेति**—पार्वत्या ऊरुद्वयं वर्णयति—नागेन्द्राणां महीदिग्गजानां हस्तास्त्वचि कर्कशत्वाद्धेतोः, कदलीविशेषाश्चैकान्तमत्यन्तं शैत्याद्धेतोः, लोके परिणाहि विशालं रूपं लब्ध्वाऽपि तदूर्वोः तस्याः ऊर्वोः उपमानाद् बाह्या बहिर्वर्तिनो जाताः सम्पन्नाः। तदूरुद्वयं करिकरसमं कदलीकाण्डसमं च तदा स्याद्यदि तद्द्वयमपि क्रमशः कार्कश्यं शीतलतातिशयं च जह्यादित्यर्थः। तथा च निरुपममभूदूरुद्वयं तस्याः, उपमान्तरालाभादिति भावः। उपजातिवृत्तम् ॥८०॥

**भाषार्थ**—पदार्थानामिति—केवल प्रस्तुत या केवल अप्रस्तुत ( अप्राकरणिक ) पदार्थों के एक धर्म के साथ अभिसम्बन्ध का नाम तुल्ययोगिता है। टीका का अर्थ—केवल प्रस्तुत या केवल अप्रस्तुतविषयक एक धर्म के सम्बन्ध का नाम तुल्ययोगिता है। जैसे—यमिति। जिस हिमालय को सारे पर्वतों ने बछड़ा बनाकर, तथा दोहन क्रिया में निष्णात मेरु को दोग्धा बनाकर,

पृथु राजा से निर्दिष्ट पृथ्वी रूपी गौ से देदीप्यमान रत्न तथा महौषधि-रूप दुग्ध को दुहा था । हिमालय में ही दिव्य रत्न तथा महौषधियाँ मिल सकती हैं और कहीं नहीं, यह भाव है । यहाँ हिमालय का वर्णन प्रस्तुत है । अतः हिमालय की ओषधियाँ तथा रत्न दोनों प्रकृत ( प्रस्तुत ) हैं । इन ओषधियों तथा रत्नों में दोहन क्रियारूप एक ही धर्म का सम्बन्ध होने से उपमा प्रतीयमान है । अतः यहाँ पर केवल प्रस्तुतविषयक तुल्ययोगिता अलङ्कार है । नागेन्द्रेति—दिग्गजों की सूँडें बड़ी कठोर थीं । केलों के स्तम्भ बहुत ही ठण्डे थे । अतः लम्बाई, चौड़ाई, मोटाई में समान होने पर उसकी ऊरुओं=जाँघों के उपमान बनने योग्य नहीं थे । यहाँ पर नागेन्द्र ( गजराजों—ऐरावत आदि ) की सूँडें तथा कदली विशेष दोनों अप्रस्तुत हैं क्योंकि ऊरुओं का वर्णन ही प्रस्तुत है । इनमें परिणाहिता—विशालता प्राप्तिरूप क्रिया का सम्बन्ध है, जो कि यहाँ समान धर्म है । अतः यह उदाहरण केवल अप्राकरणिकविषयक है ।

दीपकम्—

'अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।' [विश्वनाथः]

**अप्रस्तुतप्रस्तुतयोः एकधर्म्माभिसम्बन्धो दीपकम् ।**

यथा—बलावलेपादधुनाऽपि पूर्व्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥८१॥ [माघः]

**अत्र प्रस्तुतायाः निश्चलायाः प्रकृतेरप्रस्तुतायाः पतिव्रतायाश्च जन्मान्तरेऽपि स्वकीयपुरुषानुगमनरूपैकक्रियासम्बन्धः ।**

**टीका**—दीपकं लक्षयति—अप्रस्तुतेति । तुल्ययोगितायां केवलप्रस्तुतेष्वेव केवलाप्रस्तुतेष्वेवैकधर्माभिसम्बन्धोऽभूदिह तु प्रस्तुतेऽप्रस्तुते चेति विशेषः । स्पष्टमन्यत् । **बलेति**—जिगीषुणा जयेच्छुना तेन शिशुपालेनाधुनाऽपि पूर्ववत् पूर्वजन्मनीव रावणावतारे यथा जगदबाध्यत तथैवाऽद्यापि जगत् प्रबाध्यते । यतः सती योषित् निश्चला प्रकृतिश्च भवान्तरेषु जन्मान्तरेष्वपि पुमांसम् अभ्येति

प्राप्नोति । अत्र 'सतीव योषित् प्रकृतिः सुनिश्चला' इति पाठे प्रमिते तु अर्थान्तरन्यासोऽलङ्कार इति बोध्यम् ॥८१॥

**भाषार्थ**—जहाँ प्रस्तुत और अप्रस्तुत दोनों प्रकार के पदार्थों में एक धर्म का सम्बन्ध हो, वहाँ दीपक अलङ्कार होता है। प्रस्तुत और अप्रस्तुत में एकधर्माभिसम्बन्ध का नाम दीपक है। जैसे—बलेत्यादि। वह शिशुपाल जैसे रावण के रूप में संसार को सताता था, उसी प्रकार अब भी सता रहा है। क्योंकि पतिव्रता सती नारी और निश्चल स्वभाव यह दोनों मनुष्यों को दूसरे जन्म में भी प्राप्त हो जाते हैं। यहां प्रस्तुत निश्चला प्रकृति और अप्रस्तुत पतिव्रता का जन्मान्तर में भी अपने अपने पुरुष का अनुगमन रूप एक क्रिया का सम्बन्ध कहा गया है। अतः दीपक अलङ्कार है। इस दीपक का एक और भी भेद है, उसे कहते हैं—

अन्यरूपं दीपकम्—

**'अथ कारकमेकं स्यादनेकासु क्रियासु चेत्'** । [ विश्वनाथः ]

**तदाऽपि दीपकमेव। यथा—**

**विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा**
**प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।**
**तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो**
**विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥८२॥** [उत्तरच०]

**अत्र भ्रमयति सम्मीलयति चेत्युभयोः क्रिययोः कर्त्तृकारकमेकं विकार इति, कर्मकारकञ्चैकं चैतन्यमिति ।**

**टीका**—अथेति—यद्यनेकासु क्रियासु एकं कारकं भवेत्तदपि दीपकालङ्कारो भवतीत्यर्थः। यथा—**विनिश्चेतुमिति**—रामो ब्रूते—हे सीते ! सुखमिति दुःखमिति वा विनिश्चेतुं परिच्छेत्तुं न शक्योऽशक्य इति यावत् ( इदमपि विशेषणं विकारस्य )। तथाऽयं विकारः किं प्रमोहः किंवा निद्रा किंवा विषस्य विसर्पो विसर्पणजन्यः प्रभावः किमु वा मदो मादकद्रव्यसेवनजन्मेव चेतसो विकारः इत्येवं विकल्पास्पदीभूतः। किञ्च—मम हि तव स्पर्शे स्पर्शे तव करेण स्पर्शे सति परिमूढः स्वस्वविषयग्रहणासमर्थ इन्द्रियगणश्चक्षुरादिकरणसमूहो येन स तथोक्तो मम विकार आन्तरावस्थाविशेषः चैतन्यमन्तःकरणावच्छिन्नं

चैतन्यं जीवचैतन्यमिति यावत् भ्रमयति प्रतिकूलतया भासमानः सन् क्षुब्धं करोति । संमीलयति अनुकूलतया भासमानः सन्नुल्लासयति च आनन्देन निमीलितनेत्रतामाचष्टे इत्यर्थः । केचित्तु आवृणोतीत्यर्थमपि संमीलयतिपदस्य प्राहुः । मम चैतन्यं ज्ञानं विलुप्तं नष्टमिव किञ्चिदपि न शक्नोतीत्यर्थः । शिखरिणी वृत्तम् ॥८२॥

भाषार्थ—दीपक भेद का लक्षण कहते हैं—अथेति । यदि अनेक क्रियाओं में एक ही कारक हो तौ भी दीपक अलङ्कार ही होता है । जैसे—तदापि=तौ भी दीपकमेव=दीपक अलङ्कार ही होता है । विनिश्चेतुमिति —राम कहते हैं—सीते ! तेरे स्पर्श स्पर्श में मेरी इन्द्रियों को स्वविषय ग्रहण में असमर्थ बनाने वाला विकार मेरी चेतनाशक्ति को भ्रान्त बना रहा है तथा ढक रहा है वा घुमा रहा ( अस्थिर कर रहा ) है और आनन्द से कभी कभी स्थिर बना रहा है । मैं यह निश्चय नहीं कर सकता कि यह सुख है या दुःख है । मोह है या निद्रा है । यह विष का फैलना है या मद है । मैं किसी एक निश्चय पर नहीं पहुँच रहा हूँ । तू जब जब छू लेती है तब तब चित्त की दशा अनिर्वचनीय सी हो जाती है । यहाँ 'भ्रमयति' और 'सम्मीलयति' इन दोनों क्रियाओं का एक ही 'विकार' कर्ता है तथा कर्मकारक 'चैतन्य' भी एक ही है । इस प्रकार इस उदाहरण में दीपक का लक्षण घट जाता है ।

सन्देहः—

**'सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।'** [विश्वनाथः]
**भेदोक्तौ तदनुक्तौ च द्विधाऽसौ परिकीर्त्तितः ॥**

**प्रकृते—उपमेये, अन्यस्य—उपमानस्य, प्रतिभा—कविप्रौढोक्तिः, तया उत्थितः ; तेन "स्थाणुर्वा पुरुषो वा" इति सन्देहे नायमलङ्कारः । भेदः—वैधर्म्यम् ।**

**भेदोक्तौ यथा—**

**अयं मार्त्तण्डः किम् ? स खलु तुरगैः सप्तभिरितः**
**कृशानुः किम् ? सर्वाः प्रसरति दिशो नैष नियतम् ।**
**कृतान्तः किं साक्षात् ? महिषवहनोऽसाविति चिरं**
**समालोक्याऽऽजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥८३॥**

भेदानुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
चित्तोन्मादरसः स्वयं नु मदनो मासो नु पुष्पाकरः ?।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ? ॥८४॥ [विक्रमो०]

**टीका**—सन्देह इति—'भेदोक्तौ...परिकीर्तितः' इत्यन्तः पाठो दर्पणे न दृश्यते। तत्स्थाने 'शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा' इति पाठः समुपलभ्यते। अस्यार्थस्तु—भेदस्य विशेषस्य वैधर्म्यस्योक्तौ कथने तस्यानुक्तौ चेत्येवमसौ द्विधा परिकीर्तितः प्रोक्त इत्यर्थः। **अयमिति**—अयं राजा किं मार्तण्डः सूर्यः ? नेत्याह। कुतः—स सूर्यः सप्तभिस्तुरगैरश्वैरितः इतं गतमस्यास्तीति इतः गतिमान् इत्यर्थः। अर्शआद्यजन्तस्य रूपम्। तत् किं कृशानुः ? नेत्याह। यत एष राजा सर्वा दिशो न प्रसरति। तत्किं साक्षात् कृतान्तो यमः ? नेत्याह। असौ यमो महिषवहनः, एवं विकल्पान् भटास्त्वां राजानमाजौ सङ्ग्रामभूमावालोक्य विदधति कुर्वन्तीत्यर्थः। शिखरिणी ॥८३॥ **अस्या** इति—उर्वशीं दृष्ट्वा पुरूरवास्तर्कयति—अस्याः सर्गस्य निर्माणस्य विधौ विधाने किं कान्तिप्रदश्चन्द्रः प्रजापतिर्ब्रह्माऽभूत् ? यद्वा चित्तोन्मादे चित्तस्य मदनयुक्तताकरणे रसोऽनुरागो यस्य स मदनः कामोऽभूत्प्रजापतिः किम्। यद्वा पुष्पाकरो मासो वसन्तोऽस्य प्रजापतिरभूत्। यतः वेदाभ्यासेन जडो विषयेभ्यो व्यावृत्तं कौतूहलमिच्छातिरेको यस्य स तादृशः पुराणश्चिरन्तनो मुनिर्ब्रह्मा इदं मनोहरं रूपं निर्मातुं कथं प्रभवेत् समर्थो भवेदित्यर्थः। सर्वथापि नेयं ब्रह्मणः कृतिः किन्तु मदन-वसन्त-चन्द्राणां मिलितानामेवेति निश्चिनोति कविरिति भावः। शार्दूलविक्रीडितम् ॥८४॥

**भावार्थ**—सन्देह इति—प्रकृत=उपमेय में अन्य=उपमान का कवि-प्रतिभाजन्य जो संशय, उसे सन्देह कहते हैं। वह किसी भेद के=विशेष के (सन्देहविघटक विशेष के) अर्थात् वैधर्म्य की उक्ति से होता है तथा अनुक्ति से। इस प्रकार दो प्रकार का माना जाता है। प्रकृत—उपमेय, अन्य—उपमान। प्रतिभा=कवि की प्रौढोक्ति से उत्थित हो। अतः 'यह ठूँठ है या पुरुष है' इत्याकारक सन्देहस्थल में यह अलङ्कार नहीं होता। भेद (वैधर्म्य) के कथन के साथ संदेह का उदाहरण देते हैं। जैसे—युद्धयमान राजा को देखकर शत्रुवर्ग विकल्प करता है कि क्या यह सूर्य है !

नहीं, उसके सात घोड़े होते हैं। क्या फिर आग है! नहीं, यह चारों तरफ नहीं फैल रहा। तो क्या यमराज है! नहीं, उसकी भैंसा सवारी है। इस प्रकार के विकल्प हे राजन्! शत्रुगण तुझे देखकर किया करते हैं। वैधर्म्य के कथन न करने पर जैसे—अस्या इति। राजा पुरूरवा उर्वशी को देखकर सोचता है कि क्या इसके बनाते समय प्रजापति का पद चन्द्रदेव ने लिया था या चित्त को उन्मथन या उन्मत्त बनाने वाले कामदेव ने लिया था या वसन्त ऋतु (या चैत्रमास) ने लिया था क्योंकि निरन्तर वेदाभ्यास से जड सांसारिक विषयों से हटा हुआ विरक्त पुराण मुनि ब्रह्मा जी तो ऐसा सुन्दर रूप बना नहीं सकते।

भ्रान्तिमान्—

साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता ॥'

[ विश्वनाथः ]

**प्रतिभोत्थितेति "शुक्तिकायां रजतम्" इति भ्रान्तिर्नास्य अलङ्कारस्य विषयः। यथा—**

**महाराज! श्रीमन्! जगति यशसा ते धवलिते**
**पयःपारावारं परमपुरुषोऽयं मृगयते।**
**कपर्दी कैलासं करिवरमथायं कुलिशभृत्**
**कलानाथं राहुः कमलभवनो हंसमधुना ॥८५॥** [ महापद्यम् ]

**अत्र भोजराजस्य यशसा धवलीकृते जगति सर्वत्रापि परमपुरुषाऽऽदीनां समुद्राऽऽदिभ्रान्तिः कविप्रतिभोत्थितेति भ्रान्तिमानलङ्कारः।**

**टीका**—भ्रान्तिमदलंकारं लक्षयति—साम्यादिति। साम्यात्तौल्यादतस्मिन् अतादृशे वस्तुनि विषये प्रतिभयोत्थिता जाता तद्बुद्धिर्भ्रान्तिमान्नामकोऽलङ्कारो भवति। उदाहरणमाह—**महाराजे**ति। हे महाराज! श्रीमन्! शोभातिशयसम्पन्न! भोज! जगति ते यशसा कीर्त्या धवलिते सति परमपुरुषो भगवान् वैकुण्ठनाथो हरिः स्वशय्याभूतं पयःपारावारं क्षीरसागरं मृगयतेऽन्वेषयति। कपर्दी शिवश्च कैलासं मृगयते। कुलिशं वज्रं बिभर्तीति कुलिशभृत् इन्द्रः करिवरम् ऐरावतं मृगयते। राहुः कलानाथं चन्द्रमसं मृगयते। कमलभवनो ब्रह्माऽधुना हंसं मृगयते इत्यर्थः ॥८५॥

**भावार्थ**—साम्यादिति—जो वस्तु जिस रूप की नहीं है, उसे वैसी अपनी प्रतिभावश निश्चितरूप से बता देना भ्रान्तिमान् अलङ्कार होता है। जैसे कोई कवि राजा भोज का वर्णन करता है कि—हे महाराज ! श्रीमन् ! भोज ! तुम्हारे यश से संसार के सफेद हो जाने पर जितनी भी चीजें थीं, वे सब सफेद रंग की हो गईं तो भगवान् हरि को यह ढूँढ पड़ी कि मेरा क्षीरसागर कहाँ है, वह उसे नहीं मिल रहा है। शिव जी कैलास को ढूँढते हैं। इन्द्र ऐरावत को ढूँढ रहा है। राहु अपने खाद्य पदार्थ चन्द्रमा को ढूँढता है। ब्रह्मा जी अपनी सवारी हंस को ढूँढते फिरते हैं। यहाँ भोजराज के यश से धवल बने हुए संसार में सब जगह परमपुरुष ( विष्णु ) आदि को समुद्रादि की भ्रान्ति हो रही है। अर्थात् जिधर निगाह डालते हैं, वहीं क्षीरसागर दिखाई पड़ रहा है, यह कवि की प्रतिभा से उत्थापित ( कल्पित ) भ्रान्ति है। अतः भ्रान्तिमान् अलङ्कार का लक्षण यहाँ समन्वित हो जाता है।

अपह्नुतिः—

**'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ॥'** [ विश्वनाथः ]

**इहापि कविप्रौढोक्तिसिद्धमेव। यथा—**

**नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।**
**नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥८६॥**

**अत्र प्रस्तुतानां नभोमण्डलाऽऽदीनां प्रतिषेधेन अम्बुराशिप्रभृतीनामप्रस्तुतानां स्थापनम्। यथा वा—**

**दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।**
**मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥८७॥** [ रघु० ]

**अत्र प्रस्तुतानां मणीनां प्रतिषेधेन अश्रुबिन्दूनां स्थापनम्।**

**टीका—प्रकृतमि**ति—प्रकृतं प्रस्तुतं प्रतिषिध्य निवार्य अन्यस्य स्वप्रतिभयाऽऽरोप्यस्य स्थापनमपह्नुतिः स्यादित्यर्थः। यथा—**नेदमि**ति। इदं दृश्यमानं नभोमण्डलम् आकाशमण्डलं नास्ति किन्तु नीलजलवलितो अम्बुराशिर्जलधिरेव। एताश्च तारा नक्षत्राणि न किन्तु नवस्य सद्यउत्थितस्य फेनस्याब्धिकफस्य भङ्गाश्छेदाः। अयं च शशी नास्ति तर्हि कोस्ति ? कुण्डलितः कुण्डलाकारः फणीन्द्रो नागाधिपोऽस्ति। चन्द्रे दृश्यमानः कलङ्को नास्ति किन्तु शयितो निद्रासुखमनुभवन्

मुरारिरस्ति इत्यर्थः ॥८६॥ उदाहरणान्तरमाह—दशेति। तत्क्षणं रामजन्मकाले दशाननस्य रावणस्य किरीटेभ्यो मुकुटेभ्यः ( रावणस्य दशशिरस्कत्वात् किरीटानां दशकत्वमिति भावः ) मणिव्याजेन रत्नच्छलेन राक्षसश्रियः राक्षसराज्यलक्ष्म्याः अश्रुबिन्दवो बाष्पजलकणाः पृथिव्यां पर्यस्ताः क्षिप्ताः पतिता इवेत्यर्थः ॥८७॥

**भाषार्थ**—प्रकृतमिति—प्रस्तुत को हटाकर अप्रस्तुत आरोप्य का स्थापन ( आरोप ) करना अपह्नुति अलङ्कार होता है। यहाँ भी कविप्रौढोक्ति सिद्ध ही अन्य स्थापन होता है। जैसे—यह आकाशमण्डल नहीं किन्तु समुद्र है। ये तारे नहीं किन्तु समुद्रफेन के टुकड़े हैं। यह चन्द्रमा नहीं किन्तु कुण्डल लगाये सर्पराज वासुकि पड़े हैं। तथा इनके बीच में जो काला निशान है, वह कृष्ण भगवान् सो रहे हैं। यहाँ प्रस्तुत आकाशमण्डल आदि को हटाकर समुद्र आदि अप्रस्तुतों का सादृश्य बल से कविप्रतिभामूलक आरोप किया जाता है। उदाहरणान्तर जैसे—दशेति। रावण के दश मुकुटों से राम जी के जन्म के समय मणियाँ गिर पड़ीं। वे मणियाँ न थीं किन्तु राक्षसराजलक्ष्मी के अश्रुकण थे। राजलक्ष्मी रोई कि मेरा नाश करने वाला उत्पन्न हो गया। यहाँ प्रस्तुत मणियों को हटाकर अश्रुबिन्दुओं का स्थापन किया गया है।

समासोक्तिलक्षणमुक्तमाग्नेये—

**'यत्रोक्तात् गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।**
**सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः॥'**

**तत्समानविशेषण इत्युपलक्षणम्, तेन तत्समानकार्यैः, तत्समानलिङ्गैश्च गृह्यते। यत्र समैर्विशेषणैः कार्यैर्लिङ्गैश्च उक्तात्—प्रस्तुतात्, अप्रस्तुताद्वा, अन्यः—यथाक्रममप्रस्तुतः, प्रस्तुतो वा, अर्थो गम्यते—बोध्यते, सा सङ्क्षेपोक्तिस्वरूपत्वात् "समासेन—सङ्क्षेपेण उक्तिः" इति व्युत्पत्त्या—समासोक्तिः कथिता। सङ्क्षेपश्च एकस्य वचनेनोभयप्रतिपत्तिरिति। आदर्शे—"अप्रस्तुतात् वाच्यात् प्रस्तुतस्य गम्यत्वे समासोक्तिः" इत्यभिहितम्। नव्यास्तु—तद्वैपरीत्येन—"प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिः। अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा" इत्याहुः। "वाच्ये प्रस्तुतेऽप्रस्तुतव्यवहार-**

समारोपः समासोक्तिः" इति विश्वनाथाऽऽदयः । वस्तुतस्तु—उभयत्रापि समासोक्तेरेवाभ्युपगमस्यौचित्यादनुगुणमेव प्राचीनरीत्या लक्षणमुक्तमस्माभिः । उदाहरणं क्रमेण—

श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाऽऽहतैः किसलयैः सलयैरिव पाणिभिः ॥८८॥
[रघु०]

अत्र विशेषणसाम्यात् कार्यसाम्याच्च प्रस्तुताद्वनलतारूपार्थादप्रस्तुतो नर्त्तकीरूपोऽर्थः प्रतीयते ।

चातकस्त्रिचतुरान् पयःकणान् याचते जलधरं पिपासितः ।
सोऽपि पूरयति भूयसाऽम्भसा चित्रमत्र महतामुदारता ॥८६॥
[ पूर्वचातकाष्टक० ]

अत्र अप्रस्तुताच्चातकाज्जलधराच्च कार्यसाम्यात् प्रस्तुतो याचकः, उदाराऽऽशयो धनपतिश्च बोध्यते ।

**टीका**—समासोक्तिलक्षणमाह—यत्रेति । अस्यार्थो मूल एव स्पष्टीकृतः । आदर्शे=काव्यादर्शे दण्डिकविनिर्मिते इत्यर्थः । शिष्टं निगदनीतार्थं भाषायाञ्च विवरिष्यामः । **श्रुतीति**—श्रुतिसुखाः कर्णयोरानन्ददायका ये भ्रमरास्तेषां स्वनाः गुञ्जितानि त एव गीतयो यासां ताः, कुसुमान्येव कोमला दन्तानां दशनानां रुचो दीप्तयो यासां ताः, कोमलकुड्मलान्येव दन्तस्थानीयान्यभूवन्नित्यर्थः । इत्थंभूता उपवनान्तस्य गृहोद्यानप्रान्तभागस्य लताः पवनेनाहतैर्वातनोदितैः किसलयैः कृत्वा सलयैः लयाख्यसङ्गीताङ्गभूतकरव्यापारसहितैः पाणिभिरिव हस्तैरिव बभुश्चकाशिरे इत्यर्थः । द्रुतविलम्बितं वृत्तम् ॥८८॥ **चातक** इति—पिपासितः सञ्जाततृषश्चातकस्तदाख्यया प्रसिद्धः पक्षी जलधरं मेघं त्रिचतुरान् त्रयो चत्वारो वा त्रिचतुरास्तान् पयःकणान् जललवान् याचतेऽभ्यर्थयते । सोऽपि जलधरोऽपि भूयसाऽम्भसा पूरयति । अत्र महतामुदारतेति चित्रमाश्चर्यम् । रथोद्धता वृत्तम् ॥८६॥

**भाषार्थ—यत्रेति—समासोक्ति का लक्षण करते हैं—जिस वाक्य में कहे गये पदों से उस उक्तार्थ में जो विशेषण, कार्य या लिङ्ग हैं, यदि वे भी उसमें हों तो बुधगण उसे समासोक्ति कहते हैं क्योंकि इसका अर्थ संक्षिप्त है । 'संमासेन संक्षेपेणोक्तिर्वचनं समासोक्तिः' ( यहाँ प्रस्तुत का अभि-**

धान अभिधावृत्ति से होता है तथा अप्रकृत का व्यञ्जना से यह भाव है ) एक ही शब्द से दो अर्थ बतलाना ही संक्षेप है। लक्षण वाक्यगत 'तत्समान-विशेषण' पद उपलक्षण है। तत्समानकार्य और तत्समानलिङ्ग भी वह अप्रस्तुत अर्थ हो तो भी उसकी प्रतीति हो जाती है। जहाँ पर सम विशेषण, सम कार्य और सम लिङ्गों से उक्त=कहे गये प्रस्तुत या अप्रस्तुत से भिन्न क्रमशः अप्रस्तुत या प्रस्तुत अर्थ गम्यमान हो, वह संक्षेपतः उक्ति होने से 'समासेन=संक्षेपेण उक्तिः' इस व्युत्पत्ति के अनुसार समासोक्ति कहलाती है। काव्यादर्श में 'अप्रस्तुत वाक्य से प्रस्तुतार्थ के गम्यमान होने पर समासोक्ति अलङ्कार होता है' यह कहा है। नवीन आचार्यों के मत में 'जो प्रस्तुत वाक्यार्थ हो, उसके विपरीत अर्थात् प्रस्तुत से अप्रस्तुत की प्रतीति होने पर समासोक्ति होती है। तथा अप्रस्तुत से प्रस्तुत की प्रतीति होना अप्रस्तुतप्रशंसा होती है' इस प्रकार का भेद इष्ट है। वाच्य के प्रस्तुत होने पर अप्रस्तुत व्यवहार 'व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेदः' यानी उक्त व्युत्पत्ति से अवस्था भेद का जो समान कार्य, लिङ्ग और विशेषणों के बल से समारोप है, उसे समासोक्ति कहते हैं। यह विश्वनाथ ( साहित्यदर्पणकार ) का मत है। वास्तव में तो प्रस्तुत से अप्रस्तुत और अप्रस्तुत से प्रस्तुत के ज्ञान होने पर दोनों स्थलों पर समासोक्ति का मानना ही उचित है। तथा तदनुकूल ही हमने लक्षण भी कर दिया है। क्रम से उदाहरण जैसे—श्रुतीति। कानों को सुख देने वाली भौंरों की गुञ्जार रूपी गीतों को गाने वाली फूल रूपी कोमल दाँतों वाली उपवन की लताएँ वायु से हिलाए हुए पत्तों से ऐसी मालूम होती थीं, जैसे ताल स्वर लय के साथ हाथ चला रही हों। यहाँ विशेषणों के बल से ( क्योंकि नर्त्तकी का गाना बड़ा अच्छा होता है तथा उसके दाँत चमकदार होते हैं और हाथों को वह लय के उतार-चढ़ाव के साथ चलाती भी है) विशेषण और कार्यों की समता है। अतः प्रस्तुत वनलता रूप अर्थ से अप्रस्तुत नर्त्तकीरूप अर्थ प्रतीत होता है। चातक इति—प्यासा चातक तीन चार जल की बूँदें मेघ से माँगता है। वह भी बहुत उदार है। अतः दो चार बूँदों की जगह बहुत अधिक जल से उसे भर देता है। आश्चर्य और सच है कि बड़ों की उदारता भी बड़ी है। यहाँ अप्रस्तुत

चातक और बादल से कार्यसाम्य के बल से प्रस्तुत कोई याचक तथा उदारचेता धनी—सेठ प्रतीत होता है।

अप्रस्तुतप्रशंसा—

'अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः।
तन्मुखेन प्रस्तुतस्य निन्दा यत्र प्रतीयते॥' [ दण्डी ]

अप्रक्रान्तेषु—अप्रस्तुतेषु, अप्रस्तुतानामित्यर्थः [ षष्ठ्यर्थे सप्तमी ]। यथा—

पादाऽऽहतं यदुत्थाय मूर्द्धानमधिरोहति।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥६०॥ [ माघः ]

अत्र अप्रस्तुतस्य रजसः प्रशंसामुखेन प्रस्तुतस्य अपमानसहिष्णोर्निन्दा प्रतीयते। यथा वा—

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुराऽऽदिभिः॥६१॥

अत्र मृगाणां सुखजीवनस्याप्रस्तुतस्य प्रशंसया प्रस्तुतस्य राजानुवृत्तिजीवनस्य निन्दा प्रतीयते।

**टीका**—अप्रस्तुतेति—या अप्रक्रान्तेषु अप्रस्तुतविषयेषु स्तुतिः स्तवनं तन्मुखेन तद्द्वारा यत्र प्रस्तुतेषु निन्दा प्रतीयते सा अप्रस्तुतप्रशंसा स्यादित्यर्थः। **पादेति**—यद्रजः पादाभ्यां पादेनाऽऽहतं सन्मूर्धानमधिरोहति तद्रजोऽपमानेऽपि स्वस्थात्कुशलान्निर्विकाराद्देहिनो वरं श्रेष्ठमित्यर्थः॥६०॥ **सुखमिति**—वनेष्वरण्येषु अपरसेविनः परेषां सेवां ये न कुर्वन्ति ते तादृशाः हरिणा अयत्नसुलभैर्यत्नं विनैव सुप्रापैस्तृणदर्भाङ्कुरादिभिरन्नैश्च सुखं जीवन्ति आयुः सुखेन क्षपयन्तीत्यर्थः। उदाहरणद्वयेऽप्यनुष्टुप् वृत्तम्॥६१॥ यत्तु पूर्वस्मिन् पद्ये कोलाचलमल्लिनाथसूरिणा व्यतिरेक इत्युक्तं, तदुपेक्ष्यम्। तथाऽङ्गीकारे सर्वाऽऽलङ्कारिकविरोधाऽऽपत्तेः, देहिरजसोरुपमानोपमेयभावस्याऽऽर्थिकत्वेऽपि शाब्दत्वाभावाच्च।

**भाषार्थ**—अप्रस्तुतप्रशंसा का लक्षण करते हैं—अप्रस्तुतेति। जो अप्रक्रान्त अप्रस्तुतविषयक स्तुति की जावे, उसके द्वारा जो प्रस्तुत की निन्दा बोधन करना है, उसका नाम अप्रस्तुतप्रशंसा है। अप्रक्रान्तेषु—यह सप्तमी षष्ठी के अर्थ में है। जैसे—पैरों से मारी हुई जो धूल सिर पर चढ़ जाती है,

वह धूल अपमान होने पर भी स्वस्थ बने हुए मनुष्य से कहीं अच्छी है। यहाँ अप्रस्तुत रज ( धूलि ) की प्रशंसा के द्वारा प्रस्तुत अपमानसहिष्णु पुरुष की निन्दा प्रतीत होती है। उदाहरणान्तर जैसे—सुखमिति। जङ्गलों में किसी की सेवा ( नौकरी चाकरी ) न करने वाले हरिण तृणाङ्कुरों और दर्भाङ्कुरों तथा अन्य शाल्यादि अन्नों से सुखपूर्वक जीवित रहते हैं। यहाँ पर मृगों के सुखपूर्वक जीवन की, जो अप्रस्तुत है, प्रशंसा के द्वारा प्रस्तुत राजसेवा करके वृत्तिलाभ करने की निन्दा की गई है।

व्याजस्तुतिः—

'व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।'

[ मम्मटः ]

मुखे—आपाततः, अन्यथा—यथाक्रमं स्तुत्यां निन्दायां वा, रूढिः—पर्य्यवसानम्। स्तुतिपर्य्यवसायिनी निन्दा, निन्दापर्य्यवसायिनी स्तुतिश्च व्याजस्तुतिरिति फलितम्। निन्दायाः स्तुतिरूपेण पर्य्यवसाने व्याजेन स्तुतिरिति व्याजस्तुतिः, स्तुतेर्निन्दारूपेण पर्य्यवसाने व्याजरूपा स्तुतिः। क्रमेण यथा—

त्यक्त्वा राज्यं गिरमनुसरन् स्त्रीवशान्मूढबुद्धे
राज्ञो भ्रान्त्वा गहनविपिने हारयन् मुग्धकान्ताम्।
सख्यं बद्ध्वा कपिभिरसमं लङ्घयन् कीर्त्तिमग्र्यां
पूर्व्वेषां वो विलयमनयो हेमलङ्कां किमेतत्? ॥६२॥

अत्र स्त्रीवशवर्त्तिनो मूढधियो नरपतेर्वचनप्रतिपालनं, पूर्व्वेषां सगरसुतानां कीर्त्तिलङ्घनाऽऽदिकञ्चाऽऽपाततो निन्देव प्रतिभाति, चरमे तु पितुः प्रतिज्ञा संरक्षिता, दुस्तरं तोयनिधिमुत्तीर्य्य दुःसहप्रतापो वनिताऽपहारी दशाऽऽननो विजितः, समूलमुन्मूलितश्चेत्यहो! दुष्करं कृतमिति सर्व्वमेव स्तुत्यां पर्य्यवस्यतीति निन्दायाः स्तुतिरूपेण पर्य्यवसाने व्याजस्तुतिः।

युक्तं तवैतत् रघुवंशभूपते!
सतां हि सख्युः परिपालनं व्रतम्।
इतः स्तुतिः का जगदीश! निर्मला
भवान् यदर्थं न्यवधीन्निरागसम्? ॥६३॥

अत्र प्रियबन्धोः संरक्षणमुचितमिति तव सुग्रीवसहायत्वं युक्तमेवेत्यापाततः स्तुतिरपि, मित्रकार्य्यार्थं निरपराधस्य जीर्णकलेवरस्य शाखामृगस्य मे हननं सर्वथा गर्हितमेवेति चरमे निन्दायां पर्यवस्यतीति स्तुतेर्निन्दायां पर्यवसाने व्याजस्तुतिः।

टीका—व्याजेति—मुखे प्रारम्भे प्रथमत इत्यर्थः, निन्दा प्रतीयते, रूढिः पर्यवसानमन्यथा अन्यप्रकारेण स्तुताविति यावत् स्यात् तथा मुखे स्तुतिः स्याद् रूढिस्तु अन्यथा निन्दायां स्यात्तदा व्याजस्तुतिर्भवेदित्यर्थः। त्यक्त्वेति—रामं प्रति कस्यचिदुक्तिः—हे राम ! त्वं स्त्रीवशात्कैकेयीवशान्मूढबुद्धेर्नष्टमते राज्ञो दशरथस्य गिरं वाणीमनुसरन् पालयन् गहनविपिने निबिडकानने मुग्धकान्तां मुग्धश्रियं सीतां हारयन् कपिभिरसममतुल्यं निन्द्यमित्यर्थः, सख्यं मैत्रीभावं बद्ध्वा पूर्वेषां अग्र्यां श्रेष्ठां कीर्त्तिं समुद्ररूपां विलङ्घ्य लङ्घयित्वा हेमलङ्कां सुवर्णनिर्मितां लङ्कापुरीं विलयं नाशमनयः प्रापय एतत् किमित्यर्थः। मन्दाक्रान्तावृत्तम् ॥६२॥ एवमिदमप्युदाहरणान्तरं बोध्यम् 'कः स्वर्धुनि ! विवेकस्ते पापिनो नयसे दिवम्।' इति। ( चन्द्रालोकः )। पूर्वस्मिन् पद्ये दशरथनिन्दैव प्रतीयते न स्तुतिरिति। युक्तमिति—हे रघुवंशभूपते ! तवैतद्युक्तं तव कृते इदं युक्ततरं यतः सतां व्रतं नियमः सख्युर्मित्रस्य परिपालनं रक्षणमस्ति। हे जगदीश ! इतोऽस्मादधिका का स्तुतिः का प्रशंसा यन्निरागसं निरपराधं भवान् यदर्थं मित्रार्थमवधीज्जघान। बालिनो रामं प्रति सोल्लुण्ठनोक्तिरियम्। उपजातिवृत्तम् ॥६३॥

भाषार्थ—व्याजस्तुतिरिति—प्रारम्भ में जो निन्दा या स्तुति प्रतीत हो तथा पर्यवसान में उसके विपरीत स्तुति या निन्दा रूप हो, वह व्याजस्तुति कहलाती है। मुखे=प्रारम्भ में। अन्यथा=क्रमानुसार स्तुति या निन्दा में पर्यवसान हो। रूढि=पर्यवसान। स्तुतिपर्यवसायिनी निन्दा और निन्दापर्यवसायिनी स्तुति व्याजस्तुति कही जाती है। निन्दा के स्तुतिरूप में पर्यवसान होने पर व्याज से स्तुति—व्याजस्तुति कही जाती है। स्तुति के निन्दारूप से पर्यवसान होने पर व्याजरूपा स्तुति—व्याजस्तुति कही जाती है। क्रम से उदाहरण जैसे—त्यक्त्वेति। राम से कोई उलहाना देता हुआ कहता है—अजी ! राम जी ! तुमने स्त्रियों के गुलाम लम्पट मूर्ख राजा दशरथ की आज्ञा मानी। तुम जङ्गल में मारे मारे फिरे। सुन्दर सुकुमार स्त्री की रावण से

चोरी करवा दी। बन्दरों (पशुओं) से निन्द्य मैत्री की। पूर्वजों की पूज्य कीर्त्ति का लङ्घन किया अर्थात् समुद्र पार किया। फिर सोने की लङ्का नष्ट की। यह सब एक स्त्रीवश पुरुष की आज्ञा न मानते तो क्यों होता। क्या तुमने ऐसे की आज्ञा मानकर बुद्धिमत्ता की है? नहीं। यहाँ स्त्री के वश में रहने वाले मूर्ख राजा की बात मानना, पूर्वज सगरात्मजों की कीर्त्ति का उल्लङ्घन आदि में आपाततः निन्दा सी मालूम पड़ती है। अन्ततोगत्वा पिता की प्रतिज्ञा रक्खी, दुस्तर समुद्र को पार करके दुष्ट, प्रतापी, स्त्री चुराने वाले वीरश्रेष्ठ रावण को जीता और उसका समूल विध्वंस किया। इस प्रकार बड़े बड़े दुष्कर काम किये। एवं पूर्वोक्त सब कथन स्तुति रूप में परिणत हो जाता है। अतः निन्दा के स्तुतिपर्यवसायी होने के कारण यह व्याजस्तुति है। युक्तमिति—बालि राम से ताना मार रहा है कि हे रघुकुल के राजा! राम! तुम्हारा यह कार्य उचित ही था जो तुमने मित्र की रक्षा की। पर सब से बढ़कर कीर्त्ति कमाने का काम यह किया कि निरपराध (मुञ्ज) को मार डाला। यहाँ पर प्रिय बन्धु की रक्षा करना उचित है। अतः सुग्रीव की सहायता करना ठीक ही था। यह आपाततः स्तुति प्रतीत होती है। किन्तु अन्त में इसका निन्दा में पर्यवसान होता है क्योंकि मित्रकार्य के लिये निरपराध बूढे मुञ्ज वानर (बालि) का मारना सर्वथा ही निन्दित कर्म है। इस प्रकार निन्दा प्रतीत हो रही है।

प्रतीपम्—

'प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥' [विश्वनाथः]

क्रमेण यथा—

यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायाऽनुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥९४॥ [महाना०]

मुखं यदि किमिन्दुना? यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैः? यदि तरङ्गभङ्गी भ्रुवौ।

किमात्मभवधन्वना ? यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैः ? यदि तनूरियं किं श्रिया ? ॥६५॥ [ वीरच० ]

प्रथमे प्रसिद्धानामुपमावस्तूनामिन्दीवराऽऽदीनामुपमेयत्वप्रकल्पनम्, द्वितीये इन्दुप्रभृतीनां निष्फलत्वकथनम्।

टीका—प्रसिद्धस्येति—प्रसिद्धस्याधिकगुणतया विख्यातस्योपमानस्योपमेयत्वेन प्रकल्पनम्, यद्वा निष्फलतया कीर्तनं प्रतीपालङ्कारं वदन्ति। यदिति—विरहिणो रामस्योक्तिरियम्। हे प्रिये ! तव नेत्रयोः समाना कान्तिर्यस्य तादृशं यत् इन्दीवरं नीलोत्पलम्। तत् सलिले जले, मग्नं विनष्टम्। तव मुखच्छायाऽनुकारी मुखस्य छायां कान्तिम् अनुकरोतीति तथाभूतः, त्वन्मुखसदृशकान्तिरित्यर्थः, शशी चन्द्रः, मेघैरन्तरितः तिरोहितः। ये तव गमनानुसारिणी गतिर्येषां तादृशाः राजहंसाः, तेऽपि गताः, मानसमिति शेषः, वर्षासु हंसानां मानसगमनस्य कविसमयसिद्धत्वादिति भावः। अतः दैवेन प्रतिकूलविधिनेत्यर्थः, तव सादृश्येन सादृश्यदर्शनेनेत्यर्थः, यः विनोदः कथमपि चित्तसन्तोषः, तन्मात्रमपि, मे मम, न क्षम्यते न सह्यते; प्रियासादृश्यदर्शनं हि विरहिणां विनोद; तदपि मम नास्तीति भावः। साहित्यदर्पणकृता तु इदमेव पद्यं काव्यलिङ्गोदाहरणत्वेन प्रदर्शितम्। शार्दूलविक्रीडितं छन्दः ॥६४॥ मुखमिति—सीतां दृष्ट्वा रावणस्योक्तिरियम्। यदि मुखम्, अस्तीति शेषः [ सीतायाः इति सर्वत्र अध्याहार्य्यम् ], तदा इन्दुना चन्द्रेण किम् ? न प्रयोजनमित्यर्थः, तन्मुखेनैव इन्दुकार्य्यस्य समाधानादिति भावः। यदि चलाञ्चले चले चञ्चले, अञ्चले प्रान्तभागौ, अपाङ्गावित्यर्थः, ययोः तादृशे, लोचने, विद्येते इति शेषः, तदा उत्पलानां नीलोत्पलानाम्, कदम्बकैः, सङ्घैः किम् ? न तेषामुपयोगितेत्यर्थः, तत्कार्य्यस्य लोचनाभ्यामेव संविधानादिति भावः। यदि तरङ्गस्येव भङ्गिः कौटिल्यं ययोः तादृश्यौ भ्रुवौ, विद्येते इति शेषः, तदा आत्मभवस्य कामस्य, धन्वना धनुषा, किम् ? नैव तस्य आवश्यकत्वमस्तीत्यर्थः, कामकार्मुककार्य्यस्य तद्भ्रूयुगलाभ्यामेव निष्पादनादिति भावः। यदि सुसंयताः, सुष्ठु निबद्धाः कुन्तलाः केशाः, विद्यन्ते इति शेषः, तदा अम्बुवहानां मेघानाम्, डम्बरैः निचयैः, किम् ? नैव किमपि कार्य्यमस्तीत्यर्थः, अत्रापि पूर्ववदेव हेतुर्द्रष्टव्यः। यदि इयं तनूः शरीरम्, विद्यते इति शेषः, तदा श्रिया लक्ष्म्या, किम् ? नैव तस्याः प्रयोजनमस्ती-

त्यर्थः; अत्रापि पूर्ववत् हेतुर्बोध्यः । अत्र उपमानानां निष्फलत्वप्रतिपादनात् प्रतीपालङ्कारः । वृत्तं पृथ्वी ॥६५॥

**भाषार्थ**—प्रतीपालङ्कार का लक्षण करते हैं—प्रसिद्धस्येति । प्रसिद्ध उपमान को उपमेय बनाना या उपमान की निष्फलता कथन करना प्रतीपालङ्कार कहाता है । जैसे—यदिति । राम सीता के विरह में कहते हैं कि हे प्रिये ! सीते ! तेरी आँखों की कान्ति वाले नीलाम्बुज जल में डूब गये । तेरे मुख जैसा चन्द्रमा बादलों में छिप गया । तेरी जैसी चाल चलने वाले राजहंस मानससरोवर को चले गये । क्या कहूँ, तेरी जैसी वस्तुओं को देखकर जो मैं अपना मन कुछ बहला लिया करता था, इस विनोद को भी क्रूर दैव सहन नहीं करता । मुखमिति—रावण सीता को देखकर सोचता है कि—यदि उसका मुख है तौ चन्द्रमा से क्या मतलब ? यदि उसके लोचन हैं तो कमलों से भी क्या ? यदि उसकी भौंहें हैं तो कामदेव के धनुष की क्या आवश्यकता है ? यदि उसके बाल अच्छी तरह बँधे हुए हैं तो मेघों से क्या फायदा ? यदि उसका शरीर है तो लक्ष्मी का होना भी व्यर्थ है । यहाँ पहले पद्य में प्रसिद्ध उपमान इन्दीवर ( नीलकमल ) आदि को उपमेय बनाया गया है । तथा दूसरे उदाहरण में चन्द्रमा आदि को निष्फल कहा गया है ।

अथ श्लेषः—

**'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।'** [विश्वनाथः]

**स्वभावादेकार्थैरिति शब्दश्लेषात्, वाचनमिति च ध्वनेर्व्यवच्छेदः । यथा—**

**खलस्य कण्टकस्येव द्विविधैव प्रतिक्रिया ।**
**उपानहा वक्त्रभङ्गो दूरतो वा विवर्जनम् ॥६६॥**

**टीका—शब्दैरिति**—स्वभावात् स्वभावत एकार्थैः शब्दैरनेकार्थस्य वाचनमभिधानं श्लेषो भवति इत्यर्थः । **खलस्येति**—खलस्य कण्टकस्य च प्रतीकारो द्विविध एव—प्रथमस्तावदुपानहा मुखस्य भङ्गो विधातव्यो यद्वा स दूरतः परिहरणीय एवेति । वक्त्रम्=मुखम् । पथ्यावक्त्रं वृत्तम् ॥६६॥ इदमवधेयम्—इह यद्यपि उपमाया एव प्राधान्यमिति श्लेषमूलोपमेति वक्तुं युक्तम्, तथाऽपि अलङ्काराणां चमत्कारप्राणतया श्लेषस्य उपमानिर्वाहकतया च अस्यापि उदाहरणं युक्तमेवेति बोध्यम् ।

**भाषार्थ**—शब्दैरिति—स्वभाव से एक अर्थ वाले शब्दों के द्वारा अनेक अर्थों के कथन करने को श्लेष कहते हैं। 'स्वभाव से एकार्थक' यह विशेषण देने से शब्दश्लेष से व्यावृति हुई तथा वाचन कहने से ध्वनि से व्यावृत्ति हो जाती है। जैसे—खलस्येति। दुष्ट पुरुष और काँटे के दो ही इलाज हैं—या तो जूतों से मुँह पीट दिया जावे या दूर से उनको छोड़ दिया जावे।

सहोक्तिः—

**'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्।'**

**यथा—पुरोपनीतं नृप! रामणीयकं द्विजातिशेषेण यदेतदन्धसा।**
**तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः॥६७॥**
**अत्र वपुर्यशश्चोभयमपि क्षीयते इति सहार्थबलाद्बोध्यते।**

**टीका**—सेति। यत्र सहार्थस्य बलादेकं द्विवाचकं द्व्यर्थाभिधानसमर्थं भवेत् तत्र सहोक्तिर्नामालङ्कारः। यथा—**पुरे**ति। द्वैतवने वसन्तं युधिष्ठिरं प्रति द्रौपद्या उक्तिरियम्। हे नृप! द्विजातीनां (भोजनादनन्तरं) शेषेणावशिष्टेनान्धसा अन्नेन यद्वपुः रामणीयकं सौन्दर्यं पुष्टिं च पुरोपनीतं प्रापितम्, तदेव वपुरद्य वन्यानि फलान्यश्नातीति तच्छीलस्याऽऽरण्यकफलभोजिनस्ते यशसा कीर्त्या समं कार्श्यं कृशतामल्पीयस्त्वं परैति प्राप्नोत्यपचीयते इत्यर्थः। वंशस्थं वृत्तम्॥६७॥

**भाषार्थ**—सहोक्ति अलङ्कार का लक्षण करते हैं—सेति। सह शब्दार्थ के बल से जहाँ एक शब्द दो अर्थों का वाचक हो, वहाँ सहोक्ति अलङ्कार होता है (पर इसके मूल में अतिशयोक्ति भी अवश्य रहती है)। जैसे—पुरेति। हे राजन्! द्विज—ब्राह्मणों के भोजन से अवशिष्ट ('मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने' इस स्मृतिवाक्य के अनुसार ब्राह्मणों को विशेषतया तथा त्रिवर्ण को द्विज कहते हैं) अन्न के भोजन से जो शरीर पहले सुन्दर तथा हृष्ट पुष्ट था, वही शरीर आज जङ्गली फल मूल खाने से आपके यश के साथ साथ क्षीण हो रहा है। यह द्रौपदी की युधिष्ठिर के प्रति सोपालम्भ उक्ति है।

काव्यलिङ्गम्—

**'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्॥'** [विश्वनाथः]

**वाक्यस्य पदार्थस्य वा हेतुरूपेणोक्तौ काव्यलिङ्गम् । यथा—**

**रे हस्त ! दक्षिण ! मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य गात्रमसि दुर्भरगर्भखिन्न-**
**सीताप्रवासनपटोः करुणा कुतस्ते ? ॥६८॥** [ उत्तरच० ]

**अत्र करुणाया अभावे "रामस्य गात्रमसि" इति वाक्यम्, "दुर्भरगर्भखिन्नसीताप्रवासनपटोः" इति पदार्थश्च हेतुः ।**

**टीका—हेतोरिति** । हेतोर्वाक्यार्थत्वे पदार्थत्वे वा काव्यलिङ्गमुदाहृत-मुक्तमित्यर्थः । उदाहरणमाह—**रे हस्त !** इति । रे दक्षिणहस्त ! मृतस्य परासो-र्द्विजस्य ब्राह्मणस्य शिशोर्जीवातवे जीवनहेतवे शूद्रमुनौ शम्बूके कृपाणमसिं विसृज प्रहरेत्यर्थः । ननु कथमीदृशी निर्दयता स्यात्तत्राह—रे दक्षिणहस्त ! त्वं रामस्य दाशरथेर्गात्रं शरीरावयवोऽसि भवसि । दुर्भरो दुर्वहो यो गर्भस्तेन खिन्नायाः पीडितायाः सीतायाः प्रवासने वनप्रेषणे पटोश्चतुरस्य ते करुणा कुतः कस्मात् कारणात् स्यात्, न कथमपीत्यर्थः । वसन्ततिलकं वृत्तम् ॥६८॥

**भाषार्थ**—जहाँ हेतु वाक्यार्थ रूप से कथन किया जाय, वहाँ काव्यलिङ्ग अलङ्कार होता है । वाक्यार्थ या पदार्थ के हेतु रूप से कथन करने पर काव्यलिङ्ग अलङ्कार होता है । जैसे—अरे दाहिने हाथ ! ब्राह्मणपुत्र के पुनरुज्जीवन के लिये—जीवातु के निमित्त ( 'जीवातुरस्त्रियां भक्ष्ये जीविते जीवनौषधे' इति मेदिनी ) शूद्र मुनि पर प्रहार कर । तू राम का शरीर है । तूने कठोरगर्भा सीता को वनवास का दण्ड दिया है । तुझे दया कहाँ है । यहाँ करुणा का न होना दो विशेषणों से सिद्ध है, जिनमें 'तू राम के शरीर का अवयव है' इत्याकारक एक तो वाक्यार्थ है तथा दूसरा 'सीता को वनवास भेजने में सिद्धहस्त' इत्याकारक पदार्थभूत है और दोनों ही प्रहार के होने में हेतु का काम देते हैं । अतः काव्यलिङ्ग अलङ्कार है ।

विभावना—

**'विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।'** [ विश्वनाथः ]

**यथा—अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।**
**अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥६९॥** [ कुमारस० ]

**अत्र मेघोदय-कुसुमरूपकारणयोरभावेऽपि वर्ष-फलरूपकार्ययोरभिधानम् ।**

**टीका**—विभावनामाह—यत् विना हेतुं कार्योत्पत्तिरुच्यते सा विभावना । यथा—**अपेति** । वो युष्माकं दर्शनं साक्षात्कारो मेऽतर्कितमसंभावितमेवोपपन्नं प्राप्तं प्रतिभाति प्रतीयते । एतच्चेत्थं प्रतिभाति यथा मेघोदयं विनेत्यपमेघोदयं वर्षं वृष्टिः स्यात् यद्वा न दृष्टं कुसुमं यत्र तादृशं फलं भवेदित्यर्थः ॥९९॥ यदि तु मेघोदयादिकं विना वर्षाऽऽदेः सम्भावनमात्रम्, न तु वस्तुतस्तथा समुद्भावनमुचितमित्युच्यते तर्हि वक्ष्यमाणमधोलिखितमुदाहरणं बोध्यम् । तथाहि—

अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुस्तस्या मृगीदृशः ॥

अस्यार्थः—तस्याः मृगीदृशः मृगनयनायाः, कान्तायाः इति शेषः, मध्यं कटिदेश इत्यर्थः, अनायासकृशं परिश्रमं विना क्षीणम् । दृशौ नेत्रे, अशङ्कतरले शङ्कां विना चञ्चले । वपुः शरीरम्, अभूषणमनोहारि भूषणधारणाभावेऽपि सुन्दरम् । अत्र कृशत्वाऽऽदिरूपस्य कार्यस्याऽऽयासादिरूपं कारणं विनोत्पत्तिः ।

**भाषार्थ**—विभावना का लक्षण करते हैं—जहाँ बिना ही कारण के कार्य की उत्पत्ति कही जावे, वहाँ विभावना अलङ्कार होता है । जैसे—आपका दर्शन ऐसा प्रतीत होता है, जैसे बिना मेघों के वृष्टि तथा बिना पुष्पोदय के फलोदय । यहाँ मेघोदय और पुष्परूप कारण के न होने पर भी वृष्टिरूप फल ( कार्य ) का कथन किया गया है । यदि इसमें अरुचि हो तो संस्कृत टीका में कहा गया दूसरा उदाहरण समझो ।

विशेषोक्तिः—

**'सति हेतौ फलाभावे विशेषोक्तिः' त्रिधा च सा ।**
**उक्त्यनुक्त्योर्निमित्तस्याप्यचिन्त्यत्वे च कुत्रचित् ॥**

**उक्तनिमित्ता, अनुक्तनिमित्ता, अचिन्त्यनिमित्ता चेति सा त्रिधा । क्रमेण यथा—**

**धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।**
**प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥१००॥**

अत्र धनाऽऽदिरूपहेतुसत्त्वेऽपि उन्मादाऽऽदिरूपफलाभावः, महामहिमशालित्वञ्चात्र निमित्तमुक्तम्। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे निमित्तमनुक्तं भवति।

स एकस्त्रीणि जयति जगन्ति कुसुमाऽऽयुधः।
हरताऽपि तनुं यस्य शम्भुना न बलं हृतम् ॥१०१॥

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम्।

**टीका**—सतीति—हेतौ कारणे विद्यमाने सति फलाभावे फलस्यानुत्पत्तौ सत्यां यद्वा फलाभाव इत्याकारकः प्रथमान्तोऽपि क्वचित्पाठः। अस्यार्थः स्पष्ट एव। विशेषोक्तिरलङ्कारो भवति। सा च विशेषोक्तिर्निमित्तस्योक्तावनुक्तावचिन्त्यत्वे चेत्येवं त्रिधा भवति। **धनिन** इति—ते जनाः, धनिनोऽपि धनवन्तोऽपि, निरुन्मादाः उन्मादरहिताः, अप्रचण्डा इत्यर्थः। युवानोऽपि तरुणा अपि, न चञ्चलाः चापल्यरहिता इत्यर्थः। प्रभवः निग्रहानुग्रहसमर्था अपि, अप्रमत्ताः अवहिताः सावधाना इत्यर्थः। उक्तेऽर्थे निमित्तं दर्शयति—यतः महामहिमशालिनः महाप्रभाववन्त इत्यर्थः। अनुष्टुप् ॥१००॥ **स एक** इति—स प्रसिद्ध एकः कुसुमायुधः कामस्त्रीणि जगन्ति त्रीन् लोकान् जयति। शम्भुना यस्य तनुं शरीरं हरता नाशयताऽपि बलं शक्तिर्न हृतं न नाशितेत्यर्थः। अनुष्टुप् ॥१०१॥

**भाषार्थ**—सतीति—हेतु के होते हुए भी फलोत्पत्ति के न होने को विशेषोक्ति कहते हैं। वह कारण के कथन करने पर, न करने पर, तथा अचिन्तित होने पर होती है। अतः तीन प्रकार की है। उक्तनिमित्ता विशेषोक्ति, अनुक्तनिमित्ता विशेषोक्ति तथा अचिन्त्यनिमित्ता विशेषोक्ति इस प्रकार तीन भेद होते हैं। क्रम से उदाहरण जैसे—धनिन इति। वे महामहिमा वाले हैं, जो धनी होने पर भी अपने आपको नहीं भूलते, युवा होते हुए भी चपल नहीं, प्रभु—पदाधिकारी होने पर भी प्रमाद नहीं करते। यहाँ धनादिरूप हेतुओं के होने पर भी उन्माद आदि रूप फल नहीं कहा क्योंकि न होने का कारण 'महामहिमशालित्व' यहाँ कथन किया गया है। यहीं पर चतुर्थ चरण में यदि 'महामहिमशालिनः' की जगह 'कियन्तः सन्ति भूतले' (अर्थ—ऐसे पृथ्वी पर कितने हैं) ऐसा पाठ कर दें तो अनुक्तनिमित्ता विशेषोक्ति का यह उदाहरण हो सकता है। स इति—वह अकेला ही कामदेव तीनों लोकों को जीत लेता है, महादेव जिसके शरीर को नष्ट करने पर भी जिसकी शक्ति

को नष्ट न कर सके। यहाँ पर शरीरहरण करने पर भी बल ( शक्ति ) के हरण न करने में जो कारण है, वह अचिन्त्य है।

विरोधः—

'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः।'

[ मम्मटः ]

वस्तुतोऽविरोधेऽपि विरुद्धयोरिव धर्म्मयोर्यदभिधानं, स विरोधः। अयमेव विरोधाऽऽभास इत्यप्युच्यते। व्यधिकरणयोरिव धर्म्मयोः सामानाधिकरण्येन निर्देशो विरोधः। धर्म्मश्चात्र जाति-गुणक्रियाद्रव्यरूपः। उदाहरणम्—

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ? ॥१०२॥ [ रघु० ]
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥१०३॥ [कुमारस०]

प्रथमे भगवतः प्रभावस्यातिशयित्वादापाततः प्रतीयमानस्य विरोधस्य समाधानम्। द्वितीये नञ्तत्पुरुषसमासे विरोधः, बहुव्रीहिणा परिहारः।

**टीका**—विरोधालङ्कारमाह—अविरोधेऽपि वस्तुगत्या विरोधाभावेऽपि द्वयोर्वस्तुनोर्विरुद्धत्वेन विरोधप्रतिभाप्रयोजकरूपेण यद्वचो वचनं स विरोधाख्योऽलङ्कार इत्यर्थः। **अजस्येति**—देवानां विष्णुं प्रति स्तुतिः। हे देव ! इत्यध्याहार्य्यम्। अजस्य न जायते इति अजः [ 'अन्येष्वपि दृश्यते' इति डप्रत्ययः ], तस्य जन्मरहितस्य इत्यर्थः, अथ च जन्म गृह्णतः मत्स्यादिरूपेण जायमानस्येत्यर्थः, निरीहस्य निश्चेष्टस्य, अथ च हता द्विषः शत्रवो येन तथोक्तस्य स्वपतः निद्राणस्य, अथ च जागरूकस्य नित्यजागरणशीलस्य, सर्वसाक्षितया नित्यप्रबुद्धस्यापि योगनिद्राम् अनुभवतः इति भावः, इत्थं विरुद्धचेष्टस्य, तव याथार्थ्यं तत्त्वम्, कः को जनः, वेद ? जानाति ? न कोऽपीत्यर्थः। अनुष्टुप् ॥१०२॥ ब्रह्माणं देवाः स्तुवन्ति—**जगदिति**। त्वं जगतां योनिरुत्पत्तिकारणं सन्नपि न योनिरुत्पत्तिर्यस्मात् तादृश इति विरोधः। नास्ति योनिः कारणं यस्येति परिहारः। जगतामन्तोऽन्तको

नाशकः सन्नपि निरन्तकोऽन्तकाद् भिन्न इति विरोधः । नास्ति अन्तको नाशको यस्येति तु परिहारः । जगतामादिः सन्नपि न आदिरादिकारणमिति विरोधः । नास्ति आदिः कारणं यस्येति तु परिहारः । जगतामीश्वरः सन्नपि निरीश्वर ईश्वराद्भिन्न इत्यर्थे विरोधः । नास्तीश्वरो यस्येति तु परिहारः । अनुष्टुप् ॥१०३॥

**भाषार्थ**—विरोध इति—वह विरोधालङ्कार होता है, जहाँ कि पर्यवसान में विरोध न होने पर भी विरोधाभास रूप से कथन किया जाय । वस्तुतः विरोध न होने पर भी विरुद्ध जैसे धर्मों का जो कथन है, वह विरोध है । इसी का नाम विरोधाभास भी है । भिन्न भिन्न स्थानों पर रहने वाले दो धर्मों को एक स्थान पर रहने वाला निर्दिष्ट करना विरोध कहलाता है । यहाँ पर भिन्नाधिकरणवृत्ति धर्म जातिरूप, गुणरूप, क्रियारूप और द्रव्यरूप होते हैं । जैसे—अजस्येति । अज—न पैदा होने वाला होने पर भी । जो जन्म को लीलावशात् ग्रहण करता है, जो निश्चेष्ट होने पर भी विना व्यापार के शत्रुओं का विध्वंस कर देता है, जो योगनिद्रा में पड़ा हुआ भी नित्य प्रबुद्ध है, उस तुम्फ विष्णु भगवान् के यथार्थ रूप को कौन पहचानता है, कोई नहीं । जगदिति—हे ब्रह्मन् ! तू संसार का उत्पादक होने पर भी अनुत्पादक है, यह विरोध है । अनुत्पन्न है, यह विरोध परिहार है । संसार का नाशक होने पर भी अन्तक (यम) से भिन्न है, यह विरोध है । जिसका कोई अन्तक ( नाशक ) नहीं, यह विरोध परिहार है । संसार का आदिकारण है फिर भी आदिकारण नहीं है, यह विरोध है । जिसका कोई आदिकारण नहीं, यह विरोध परिहार है । पहले श्लोक में भगवान् का प्रभाव अतिशयित है, अचिन्त्य है । अतः प्रतीयमान विरोध हट जाता है । दूसरे उदाहरण में नञ्तत्पुरुष करने पर विरोध है । बहुव्रीहिसमास से विरोध हटाया जाता है, यह समाधान है ।

विषमम्—

**'गुणक्रिये वा यत् स्यातां विरुद्धे हेतुकार्ययोः ।**
**यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः ।**
**विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥'** [ विश्वनाथः ]

यत्र कारणगुण एकः, कार्यगुणस्तद्विपरीतः, क्रिया वा द्वयोर्विरुद्धा, यत्र न केवलमारब्धस्य वैफल्यम्, अनर्थाऽऽपत्तिश्च, यत् विषमयोर्मेलनञ्च भवेत्, तदेवं चतुर्द्धा विषमम्। क्रमेण यथा—

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥१०४॥

अत्र कारणरूपासिलतायाः "कारणगुणाः कार्यगुणानारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः।

आनन्दममन्दमिमं कुवलयदललोचने! ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥१०५॥

अत्र त्वमानन्दं ददासि, त्वज्जनितो विरहस्तु तापयतितरामिति हेतुकार्ययोर्विरुद्धा क्रिया।

अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥१०६॥

अत्र न केवलं कांक्षितधनलाभो नाभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणरूपानर्थपातः।

अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता ॥१०७॥

[ माघः ]

अत्र सत्यप्रख्यापनासत्यसमाचरणयोर्विरूपयोः सङ्घटना।

**टीका**—विषमालङ्कारं लक्षयति—गुणेत्यादि। हेतुकार्ययोः (षष्ठ्यन्तम्) गुणक्रिये गुणो वा क्रिया वा विरुद्धे परस्परं विरोधयुक्ते स्यातां तर्हि विषमालङ्कारो भवति। यदा च आरब्धस्य कृतारम्भस्य कार्यस्य वैफल्यं भवति न केवलं वैफल्यमेव प्रत्युतानर्थस्यानिष्टस्यार्थस्य सम्भवो जायते तदापि विषमालङ्कारो भवति। किञ्च—या विरूपयोर्विरुद्धयोरर्थयोः संघटना सम्मेलनं तदपि विषमं विषमालङ्कारो मतम् इष्टमित्यर्थः। एवं चतुर्धा विषमालङ्कारो भवति। तच्च मूले एव स्पष्टम्। **सद्य** इति—चित्रमाश्चर्यमेतत् यद्यस्य तमालवन्नीला कृष्णा कृपाणलेखाऽसिः रणे रणे प्रतियुद्धं करस्पर्शमवाप्य करतलवर्तिनी भूत्वेत्यर्थः। त्रिलोक्यास्त्रयाणां लोकानाम् आभरणमाभूषणस्वरूपं यशः प्रसूते उत्पादयतीत्यर्थः। उपजातिः ॥१०४॥

**आनन्दमिति**—हे कुवलयदललोचने ! कुवलयपत्रसमाननयने ! त्वमिममनन्दं बहुलमानन्दं ददासि अनुभावयसि । यद्वा—इममित्यस्यास्मै जनायेत्यर्थः । तथा त्वयैव जनित उत्पादितो विरहो मे मम शरीरं तापयातितरां व्याकुलयतितरामित्यर्थः । आर्यावृत्तम् ॥१०५॥ **अयमिति**—अयमम्भोधिः समुद्रः रत्नाकरो रत्ननिधिरस्तीति हेतोर्धनाशया धनलाभेच्छयाऽसावसेवि सेवितः । धनं दूरेऽस्तु दूरे तिष्ठतु, मम वदनं क्षारवारिभिरपूरि पूरितमित्यर्थः । पथ्यावक्त्रं वृत्तम् ॥१०६॥ **अनृतामिति**—युधिष्ठिरं प्रति शिशुपालस्योक्तिः । हे धर्मराज ! युधिष्ठिर ! त्वमनृतां गिरं मिथ्यावाचं न गदसि न वदसीति जगति पटहैर्ढक्कानादैर्विघुष्यसे प्रख्याप्यसे । अथ च निन्द्यं कुत्सनीयं हरिम् अर्चयतस्तव कर्मणैव असत्यता मिथ्यावादित्वं विकसति प्रकटीभवति । यः दिग्दिगन्तसमागतविप्रराजन्याऽऽदिसमाजे प्रकटरूपेण निन्द्यव्यवहारात् न बिभेति, तस्य असत्यकथनेऽपि भीतिः नास्त्येव इति स्पष्टं प्रतिभासते इति भावः । उद्गतावृत्तम् । तल्लक्षणं तु—

'प्रथमे सजौ यदि सलौ च, न सजगुरुकाण्यनन्तरम् ।
यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥'
( इति विषमच्छन्दस्सु छन्दोमञ्जरी ) ॥१०७॥

**इदन्तु बोध्यम्**—यत्र गुणाऽऽदेरेकाऽऽश्रयवृत्तित्वेन परस्परविरोधः, तत्रैव विरोधालङ्कारो भवितुमर्हति । यत्र पुनः कार्यकारणयोर्भिन्नाऽऽश्रयवृत्तित्वेन परस्परविरुद्धत्वम्, तत्र विषमस्यावसर इत्यनयोर्भेदः ।

**भावार्थ—गुणेत्यादि—यदि कार्य और कारण के गुण और क्रियाएँ परस्पर विरुद्ध हों तौ, तथा यदि आरम्भ किये हुए कार्य की विफलता के साथ साथ अनिष्ट की आपत्ति हो, तथा विरूप दो वस्तुओं का मेल हो तौ विषम अलङ्कार होता है । (१) जहाँ कारण का गुण कार्यगुण के विपरीत हो (२) जहाँ कारण की क्रिया कार्य की क्रिया के विरुद्ध हो (३) जहाँ आरब्ध किये गये कार्य की विफलता हो तथा साथ ही साथ अनर्थ की प्राप्ति हो (४) जहाँ विरुद्धस्वभाव वस्तुओं का मेल हो—इस प्रकार चार प्रकार का विषमालङ्कार होता है । क्रमशः उदाहरण जैसे—सद्य इति । प्रत्येक संग्राम में जिसके हाथ में आते ही तमाल ( आबनूस की लकड़ी ) के समान काले रंग की तलवार शरद् ऋतु के चन्द्रमा के समान तीनों लोकों**

के आभूषणस्वरूप यश को पैदा करती है, यह बड़े आश्चर्य की बात है। यहाँ यश की उत्पत्ति का कारण जो तलवार है, उसमें काला गुण है और सफेद यश की उत्पत्ति दिखाई है, जो 'कारण के गुण कार्य के गुणों को पैदा करते हैं' इस नैयायिक सिद्धान्त के विरुद्ध है। यह गुणविरोधमूलक विषमालङ्कार है। आनन्दमिति—हे नील कमल के समान नेत्रों वाली! तू इस अत्यधिक आनन्द को भी देती है। तथा तू ही विरह को पैदा करके मेरे शरीर को पीडा पहुँचाती है। यहाँ एक ही वस्तु से आनन्द और पीडा दो क्रियाएँ उत्पन्न होती हैं, जो परस्पर विरुद्ध हैं। यह क्रियाविरुद्ध विषम है। अयमिति—यह समुद्र रत्नों का खजाना है, इसलिये धन पाने की इच्छा से समुद्र में गोता लगाया। पर इससे धन मिलना तो दूर रहा, इसने खारे पानी से सारा मुँह भर दिया। यहाँ केवल इच्छित धन ही नहीं मिला, यह बात नहीं प्रत्युत खारे पानी से मुँह का भर जाना रूपी अनिष्ट भी हो गया। यह तीसरा विषमालङ्कार है। अनृतामिति—शिशुपाल युधिष्ठिर से कहता है कि हे युधिष्ठिर! तुम झूठ नहीं बोलते, यह बात संसार में डंके की चोट से चिल्ला चिल्ला कर कही जाती है। किन्तु निन्दनीय कृष्ण की पूजा करने से तुम्हारा झूठ कर्मों से ही प्रकट है। निन्द्य की निन्दा करना सत्य है, पूजा करना असत्य है। यहाँ सत्य की प्रसिद्धि और असत्याचरण—इन दो विरुद्ध (विरूप=असमान) वस्तुओं का मेल दिखाया गया है, जो ठीक नहीं। विशेष संस्कृत टीका में इस पद्य को पढ़ें।

असङ्गतिः—

'कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः।' [ विश्वनाथः ]

**यथा—अहो! खलभुजङ्गस्य विचित्रोऽयं वधक्रमः।**
**अन्यस्य दशति श्रोत्रमन्यः प्राणैर्विमुच्यते ॥१०८॥**

**टीका**—कार्येति—कार्यस्य कारणस्य भिन्नदेशस्थत्वे सति कार्योत्पत्तौ च सत्यामसङ्गतिर्नामालङ्कारो भवति। **अहो** इति—खल एव भुजङ्गमः सर्पः तस्य वधक्रमः मारणस्य क्रमः प्रकारो विचित्र आश्चर्यकरो वर्तते, यत् अन्यस्य श्रोत्रं दशति स्पृशति अन्यश्च परश्च प्राणैरसुभिर्विमुच्यते वियुक्तो जायते। अनुष्टुप् ॥१०८॥

**भाषार्थ—कार्येति—कार्य और कारण यदि भिन्न भिन्न देश में हों तो असंगति अलङ्कार होता है। जैसे—अहो इति। अहो! दुर्जन रूपी साँप के**

काटने का यह विचित्र ही ढंग है कि किसी के कान पर काटता है तथा किसी दूसरे के प्राण निकल जाते हैं। काटता किसी को है, असर दूसरे पर होता है। यही कार्य-कारण की भिन्नदेशता है।

कारणमाला—

'परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।
तदा कारणमाला स्यात्' दर्पणे समुदीरिता॥

यथा—जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः॥१०६॥

**टीका**—परमिति—यदा परं परं प्रति उत्तरोत्तरवर्त्तमानं प्रति, पूर्वपूर्वस्य हेतुता कारणरूपत्वम्, स्यादिति शेषः, तदा कारणमाला स्यात् इति दर्पणे साहित्यदर्पणे, समुदीरिता कथिता। **जिते**ति—जितेन्द्रियत्वं विनयस्य कारणं हेतुः। गुणानां प्रकर्ष आधिक्यं च विनयाद् विनीतव्यवहारादवाप्यते लभ्यते। गुणानां प्रकर्षेण जनोऽनुरज्यतेऽनुरक्तो भवति। जनानामनुरागात् प्रभव उत्पत्तिर्यासां तास्तादृश्यश्च सम्पदो भवन्ति। वंशस्थविलं वृत्तम्॥१०६॥

**भाषार्थ**—परमिति—यदि अगले अगले के प्रति पूर्व पूर्व कारण हो, तब कारणमाला अलङ्कार होता है। यह लक्षण दर्पणकार ने किया है। **जैसे**—जितेन्द्रियत्वमिति। विनय का कारण जितेन्द्रियता है। विनय से गुणों की प्रकृष्टता—अधिकता प्राप्त होती है। गुणाधिक्य से मनुष्य अनुरक्त होते हैं। जनों के अनुराग से सम्पत्तियाँ प्राप्त होती हैं। उत्तरोत्तर एक दूसरे का कारण है, अतः कारणमाला का लक्षण संगत हो गया।

सारः—

'उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः।'

[ मम्मटः ]

यथा—राज्ये सारं वसुधा, वसुधायां पुरं, पुरे सौधम्।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥११०॥

टीका—उत्तरेति—उत्तरोत्तरमुत्तरस्मिन्नुत्तरस्मिन् इत्यर्थः, यदि उत्कर्षो भवेत्तर्हि पर उत्कृष्टतमोऽवधिरवसानमर्यादा यस्य स तथाविधः सारस्तदाख्योऽलङ्कारो भवेदित्यर्थः। अयमलङ्कारोऽलङ्कारसर्वस्वकृतोदारनाम्ना व्यवहृतः। उदाहरणमाह—राज्य इति। राज्ये वसुधा पृथिवी सारम्। वसुधायां पुरं नगरं सारम्। पुरे सौधं हर्म्यं सारम्। हर्म्ये तल्पं सारम्। तल्पे वराङ्गनाया ललनाललामभूताया अनङ्गस्य सर्वस्वं सारम्। तत्किमिति विदाङ्कुर्वन्तु स्वयमेव रसज्ञाः। यद्वा—अनङ्गस्य सर्वस्वभूतं वराङ्गना उत्तमयोषा सारमिति व्याख्येयम्। आर्या वृत्तम् ॥११०॥

भाषार्थ—उत्तरेति—उत्तरोत्तर उत्कर्ष होने पर तथा उस उत्कर्ष का अत्यन्त उत्कृष्ट को प्राप्त करके ही समाप्ति होने पर 'सार' नामक अलङ्कार होता है। जैसे—राज्य इति। राज्य में पृथ्वी सार है। पृथ्वी भर में अच्छे सुसभ्य सुसंस्कृत शहर में रहना सार है। ऐसे शहर में बढ़िया मकान (महल) में रहना सार है। महल में सुन्दर बढ़िया पलङ्ग या कौच पर आराम से पड़े रहना सार है। तथा उस पलङ्ग पर कामदेव के अस्त्र के समान सुन्दरी स्त्री के साथ सम्भोग करना परम सार है (यह किसी विषयी की उक्ति है—अष्ट है)।

एकावली—

'पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम्।
स्थाप्यतेऽपोह्यते वा चेत् स्यात् तदैकावली द्विधा ॥'

[ विश्वनाथः ]

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो विशेषणत्वेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैरेकावली कथ्यते। क्रमेणोदाहरणम्—

सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम्।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं मधुवर्षि च ॥ १११ ॥

अत्र सरसोऽम्भोजम्, तस्य भृङ्गम्; इत्यादिक्रमेण विशेषणं विधीयते।

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तत् यदलीनषट्पदम्।

**न षट्पदोऽसौ न जुगुञ्ज यः कलं**
**न गुञ्जितं तन्न जहार यन्मनः ॥११२॥** [भट्टिः]

**अत्र क्रमेण पूर्वपूर्वस्य निषेधः ।**

**टीका—पूर्वमिति—**स्थापनं विधिः । अपोहो निषेधः । तेन पूर्वं पूर्वं वस्तु प्रति विशेषणत्वेन यदा परं परम् उत्तरमुत्तरं वस्तु स्थाप्यते विधीयते यद्वाऽपोह्यते निषिध्यते तदा एकावलीनामकोऽलङ्कारो भवति । 'एकावल्येकयष्टिका' इत्यमरः । एकावली हार-विशेषः । एका चासावावली चेति कर्मधारयः । लक्षणया सादृश्यादलङ्कारोऽप्येका-वलीशब्देनोच्यते इति भावः । स्थापनमपोहनञ्च बहुधा स्यात्तदैव चमत्कारोदया-दिति भावः । **सर** इति—शरत्कालवर्णनमिदम् । यत्र शरत्समये, सरः सरोवरः विकसितानि प्रफुल्लानि अम्भोजानि यत्र तादृशमभूत् । अम्भोजं च भृङ्गैः मधुलिड्भिः सङ्गतं सहितमभूत् । भृङ्गाश्च सर्वेऽपि ससङ्गीताः सङ्गीतेन गुञ्जितध्वनिना सहिता आसन् । सङ्गीतं च मधुवर्षि अतिमनोहरमभूदित्यर्थः । अत्राम्भोज-भृङ्ग-सङ्गीतानि उत्तरत्रोत्तरत्र भृङ्गसङ्गतादिपदापेक्षयेति यावद् विशेष्याणि । तानि च पूर्वत्र पूर्वत्र विशेषणानि सम्पन्नानि । तथा चात्रोत्तरोत्तरं स्थापनमेवेति । पथ्यावक्त्रम् ॥१११॥ नेति—तत् जलं न, आसीदिति शेषः, यत् जलम्, सुचारूणि सुललितानि, पङ्कजानि यस्मिन् तथोक्तम् न । तत् पङ्कजम् पद्मम्, न, यत् अलीनाः न लीनाः सौरभमुग्धतया अनुड्डीयमानाः स्थिताः इति यावत्, षट्पदाः भ्रमराः यत्र तादृशम् । असौ षट्पदः भ्रमरः, न, यः कलं मधुरास्फुटम्, न जुगुञ्ज । तत् गुञ्जितं गुञ्जनम्, न, यत् गुञ्जितम, मनः न जहार, श्रोतॄणामिति शेषः । अत्रोत्तरोत्तरमपो-हनमेवेति भावः । वंशस्थं वृत्तम् ॥११२॥

**भाषार्थ—**पूर्व पूर्व के प्रति अगले अगले को यदि विशेषण के रूप में स्थापित करें या उसे हटावें तो एकावली अलङ्कार होता है । वह विशेषणत्वेन उत्तरोत्तर के स्थापन और अपोहन स्वरूप दो रूप वाला होने से दो प्रकार का है । पूर्व पूर्व के प्रति यथोत्तर वस्तु का विशेषणत्वेन स्थापन या निषेध सम्भव हो तो विद्वानों से दो प्रकार की एकावली कही गई है । क्रम से उदाहरण—पहले विशेषणत्वेन स्थापन करते हैं । जैसे—तालाब विकसित कमलों वाला था । कमल भौरों वाले थे । भौरों में गुञ्जन ध्वनि थी । तथा गुञ्जनध्वनि बड़ी हृदयग्राहक तथा मनोहर थी । यहाँ पर सर ( तालाब ) का

अम्भोज, अम्भोज का भौंरे आदि विशेषण किये जाते हैं। अतः प्रथम भेद का यह उदाहरण है। नेति—वह जल नहीं था, जिसमें कमल न खिले हों। वह कमल नहीं था, जिसमें भौरों का झुण्ड न बैठा हो। वे भौरे नहीं थे, जो मधुर गूँज न रहे हों। वह गुञ्जन नहीं था, जो मन को न हर रहा हो। यहाँ पर क्रम से पूर्व पूर्व का निषेध है।

अर्थापत्तिः—

**'दण्डापूपिकयाऽन्यार्थाऽऽगमोऽर्थापत्तिरिष्यते।'**

**सूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूपभक्षणम् अर्थादायातं भवतीत्येष न्यायो दण्डापूपिका। तयाऽर्थान्तरबोधनम् अर्थापत्तिः। यथा—**

**विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।**
**अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु? ॥११३॥[रघु०]**

**अतिकठिनं लौहमपि तापेन गलितं भवतीति तदपेक्षया अतिसुकुमारस्य मनुष्यहृदयस्य गलनं सुतरामायातीत्यर्थापत्तिः।**

इति अलङ्कारविवेको नाम अष्टमशिखा।

**टीका**—अर्थापत्तिं लक्षयति—दण्डेति। दण्डापूपिकान्यायेनान्यस्यार्थस्यागमोऽर्थापत्तिरुच्यते इत्यर्थः। यथा—**विललापे**ति। इन्दुमतीमरणेऽजो विलपति। तदाह—सोऽजः सहजां स्वाभाविकीं धीरतामपहाय त्यक्त्वा बाष्पगद्गदं बाष्पैरश्रुभिर्गद्गदानि अस्फुटानि अक्षराणि यत्र तत्तथा विललाप विलापं कृतवानित्यर्थः। अभितप्तं सन्तप्तम्, अयोऽपि लौहमपि मार्दवं मृदुतां भजते पुनः शरीरिषु प्राणिषु सचेतनेषु विषये कैव कथा तेषां विषये किं वाच्यमित्यर्थः। सुन्दरी वृत्तम्। अस्य तु 'वियोगिनी' इति मल्लिनाथसम्मतं नाम कुमारसम्भवे द्वितीयसर्गे द्रष्टव्यम्। रघोरष्टमसर्गे च इदमेव छन्दः मल्लिनाथेन वैतालीयमित्युक्तम् ॥११३॥

**भाषार्थ**—दण्डेति—दण्डापूपिका न्याय से अन्य (स्वसम्बद्ध) अर्थ की आपत्ति—प्राप्ति को अर्थापत्ति कहते हैं। दण्डापूपिका न्याय—जैसे एक आदमी ने एक डण्डे में मालपूए लटका कर किसी के घर पर रख दिये। उस आदमी का मन बिगड़ा और उसने पूए उतार कर खा लिये और डण्डा फेंक दिया या जला दिया। जब उस डण्डे का मालिक आया

और उसने अपना डण्डा माँगा तो मकान वाले ने कहा कि डण्डा तो चूहों ने खा लिया। इससे सुतरां यह बात आ गई कि जो चूहे डण्डे जैसी कठोर वस्तु को चट कर गये, वे मालपूए जैसी मुलायम और मीठी चीज़ को कब छोड़ने वाले थे (हँसी—पर यह चूहे आदमी की शकल के थे!)। इस ही न्याय को 'दण्डापूपिका न्याय' कहते हैं। इसके द्वारा जहाँ अर्थान्तर का बोधन किया जाय, वहाँ अर्थापत्ति अलङ्कार होता है। जैसे—विललापेति। इन्दुमती के मरण होने पर अज विलाप कर रहा है। कवि कालिदास कहते हैं कि—वह अज बड़ा धीर था पर आज उसकी वह स्वाभाविक धीरता भी काफूर हो गई थी और वह उसे छोड़कर हिचकी ले लेकर रो रहा था। गर्म करने से लोहा भी (जो अचेतन है) मुलायम हो जाता है फिर सन्तप्त मनुष्यों का तो कहना ही क्या कि वे दृढ़ता—कठोरता को छोड़ बच्चों की तरह रोने बिलखने लगते हैं। यहाँ पर अति कठोर लोहा भी जब तपाने से पिघल जाता है, तब उसकी अपेक्षा अत्यन्त कोमल मानवहृदय का पिघलना अर्थात् आ जाता है। अतः यहाँ अर्थापत्ति अलङ्कार है ('अभितप्त और 'सन्तप्त' पद में जो ताप शब्द है, उसे श्लिष्टार्थक समझना चाहिए। तन्मूलक ही अर्थापत्ति का उत्थान है) इति शिवम्।

---

## प्रश्नोत्तरमाला

(१) पदश्लेष का क्या उदाहरण है? — पृ० ११४

(२) अलङ्कारों का सामान्य लक्षण क्या है? — पृ० ११०

(३) मालोपमा और निगीर्णत्व का क्या लक्षण है? — पृ० १२१, १२२

(४) 'दिशि मन्दायते' इस व्यतिरेक के उदाहरण में मतभेद दिखाओ? — पृ० १३०

(५) प्रतिवस्तूपमा और निदर्शना में क्या भेद है? — पृ० १३२-१३४ की संस्कृत हिन्दी टीका पढ़ो

(६) दृष्टान्त में क्या विशेषता है? — पृ० १३५ की संकृत टीका पढ़ो

(७) भ्रान्तिमान् का क्या लक्षण है? — पृ० १४४

(८) काव्यादर्श के मत में समासोक्ति का क्या लक्षण है? — पृ० १४६

(९) "पादाहतं यदुत्थाय" इस पद्य में जो अप्रस्तुतप्रशंसा का उदाहरण है, उसके विषय में मल्लिनाथ का क्या मत है ? पृ० १४६ की संस्कृत टीका पढ़ो

(१०) प्रतीप का क्या लक्षण है, उदाहरण सहित लिखो ? पृ० १५२

(११) विषमालङ्कार के कितने भेद होते हैं ? पृ० १६०

(१२) "जगद्योनिरयोनिस्त्वम्" की व्याख्या करो ? पृ० १५६

(१३) कारणमाला और सार में क्या भेद है ? पृ० १६४

(१४) दण्डापूपिका न्याय कैसा होता है ? पृ० १६७

एवमन्यदप्यूह्यम् ।

---

## यह नोट विद्यार्थी ध्यान से पढ़ें—

**प्रश्न**—प्रतिवस्तूपमा और दृष्टान्त में क्या भेद है ?

**उत्तर**—प्रतिवस्तूपमा में एकधर्मी और उसके एक ही धर्म का भिन्न भिन्न शब्दों में निर्देश होता है । दृष्टान्त में दो धर्मी दो धर्म तथा साम्य गम्य होता है, शब्दोपात्त नहीं ।

**प्रश्न**—निदर्शना और दृष्टान्त में क्या भेद है ?

**उत्तर**—दृष्टान्त में दोनों वाक्यार्थ परस्पर निरपेक्ष होते हैं । निदर्शना में दोनों वाक्यार्थ परस्पर साकांक्ष होते हैं । दृष्टान्त में साधारण धर्म का भङ्ग्यन्तर का निर्देश होता है । निदर्शना में साधारण धर्म का निर्देश नहीं होता । यह स्थूल भेद है । सूक्ष्म और भी भेद हैं ।

---

इति श्रीयुतपण्डितवर-सनाढ्यकुलशेखर-श्रीभीमसेनशर्मतनूजन्मना सती-रामप्यारी-गर्भजेन सुघ्नोपघ्नाभिजन-बुलन्दशहरप्रान्तान्तर्गतनन्दि(शिववृष)खुरसमुद्भूत-खुरजानगरी(शान्तिनिकेतन)वास्तव्य-कवितार्किक-वेदान्ताचार्य-सप्ततीर्थ-**श्रीहरिदत्तशास्त्रिणा** प्रणीतायां हिन्दीभाषासंवलितायां प्रदीपिकाख्यसंस्कृतव्याख्यासहितायां काव्यदीपिकायां

**प्रश्नोत्तरसहिता अष्टमशिखा समाप्ता ।**

---

**समाप्तश्चायं ग्रन्थः ।**

---

( परिशिष्टात्मकः )

# अष्टमशिखालोकः

स्मरणम्—

**'सदृशानुभवात् वस्तुस्मृतिः स्मरणमुच्यते ।'** [ विश्वनाथः ]

**अनुरूपस्य वस्तुनो दर्शनाऽऽदिना यस्य कस्यापि अन्यस्य वस्तुनः स्मरणं स्मरणं नाम अलङ्कारः ।**

**यथा—दिव्यानामपि कृतविस्मयां पुरस्तात्**
**अम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।**
**उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीम्**
**अस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥११४॥** [माघः]

**यथा वा—अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।**
**स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥११५॥**

**टीका**—सदृशेति—सदृशस्य गुणेन आकारेण चेष्टाऽऽदिना वा अनुरूपस्य, अनुभवात् दर्शनाऽऽदिजन्यज्ञानात्, वस्तुनः दृष्टश्रुतसदृशस्य पदार्थस्य, स्मृतिः अनुध्यानम्, स्मरणं तन्नामालङ्कारः, उच्यते । **दिव्यानामिति**—जलकेलिवर्णनमिदम् । शौरिः श्रीकृष्णः, दिव्यानामपि स्वर्गवासिनामपि, किं पुनः मर्त्यानाम् ? इत्यपिशब्दार्थः, कृतः उत्पादितः, विस्मयः सौन्दर्यातिरेकेण लोकोत्तरवैलक्षण्यं यया तथाविधाम्, तथा स्फुरद्भ्याम् अरविन्दाभ्यां चारू मनोरमौ, हस्तौ यस्याः तथाविधाम् पद्महस्तामित्यर्थः, पुरस्तात् अग्रतः, अम्भस्तः जलात्, उत्तरन्तीं निष्क्रामन्तीम्, काञ्चित् कामपि स्त्रियम्, श्रियमिव मथ्यमानात् समुद्रात् सद्यः प्रादुर्भवन्तीं लक्ष्मीमिव उद्वीक्ष्य दृष्ट्वा, जलनिधेः समुद्रस्य, मन्थनं विलोडनं तस्य [ 'अधीगर्थ—' इति कर्मणीयं षष्ठी ] समुद्रमन्थनमित्यर्थः, अस्मार्षीत् स्मृतवान् । अत्र कस्याश्चित् कमलहस्तायाः कान्तायाः जलादुत्तरणमवलोक्य तां समुद्रस्य मन्थनावसरे ततः प्रादुर्भवन्तीं लक्ष्मीमिव मत्वा समुद्रमन्थनस्मरणात् स्मरणालङ्कारः इति अलङ्कारकौस्तुभकारः । अन्ये तु इवशब्दस्यात्र साक्षात् सत्त्वेनावैधर्म्यसाम्यबोधात् उपमालङ्कार एवायमित्युक्त्वा, स्मृतेस्तु प्रतीतिमात्रगम्यतया उपमाऽलङ्कारेण स्मरणा-

लंकारध्वनिमेवाऽऽमनन्ति। तथा हि माघव्याख्याने मल्लिनाथाः—'अत्र समुद्र-मन्थनस्मारिकया श्रियमिवेत्युपमया सादृश्यात् श्रीः स्मृतेति स्मरणालंकारप्रतीते-रलंकारध्वनिः' इति। पञ्चाननभट्टाचार्यास्तु—यतः पुरा देवदानवैर्मिलित्वा क्षीरोदधि-समृतं ममन्थे, पश्चाच्च लक्ष्मीः कमलहस्ता तस्मात् प्रादुरासीत् इति पौराणिकी वार्त्ता। अत एव उद्बोधकीभूतानां कमलासदृशीनां कामिनीनां दर्शनात् तत्सह-कारिणैव लक्ष्मीरूपस्य लोकप्रसिद्धवस्तुनः स्मरणं स्फुट एव, तत् कथमलंकार-ध्वनिरित्युक्तं तन्न जानीमहे, प्रत्युत एतेन तासामलौकिकं लावण्यं व्यज्यते इत्य-लंकारेण वस्तुध्वनिः समुचित एवेति प्राहुः। अत्र युक्तायुक्तत्वे विद्वदनुभवः प्रमाणम्। प्रहर्षिणी वृत्तम् 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥११४॥ शिष्य-बुद्धिवैशद्यार्थमलंकारान्तरैरपरामृष्टं स्मरणालंकारस्योदाहरणं प्रदर्श्यते—यथा वेति। **अरविन्दमिति**—खेलता क्रीडता, अरविन्दस्योपरि इति भावः, खञ्जनेन तदा-ख्यपक्षिविशेषेण, मञ्जुलं मनोहरम्, इदं पुरोवर्त्ति, अरविन्दं कमलम्, वीक्ष्य दृष्ट्वा, तस्याः स्त्रियाः, स्वकान्तायाः इत्यर्थः, चञ्चले विलोले लोचने नेत्रे यत्र तादृशम् चारु सुन्दरम्, वदनं मुखं स्मरामि स्मृतिविषयतामापादयामि। अत्र स्वकान्तामुखानुरूपखञ्ज-नवदरविन्ददर्शनेन तस्याः सुन्दरवदनरूपवस्तुनः स्मरणात् स्मरणालंकारः ॥११५॥

**भाषार्थ**—सदृशेति—किसी वस्तु के अनुभव से उसी के समान पहले अनुभव की हुई वस्तु की याद आ जाने का वर्णन जहाँ हो, वहाँ स्मरण अलंकार होता है। [ विशेष—देखी, सुनी, छुई, सूँघी या चखी वस्तु के समान यदि कोई वस्तु हम देखें, सुनें, छुएं, सूँघें या चखें तो हमें उस पहली अनुभूत वस्तु का स्मरण हो आता है, यही स्मरणालंकार का विषय है। ] अनुरूपेति—समान वस्तु के देखने आदि से पहले देखी आदि किसी वस्तु का स्मरण स्मरण नामक अलंकार होता है। जैसे—दिव्याना-मिति। देवताओं को भी चकित करने वाली, दो सुन्दर कमलों से सजे हुए दोनों हाथों वाली, [ समुद्रमन्थन से उत्पन्न हुई ] लक्ष्मी के समान सुन्दरी किसी स्त्री को सामने पानी में से निकलते देख कृष्ण जी को समुद्र मन्थन की याद आ गई। अथवा जैसे—अरविन्दमिति। खंजन पक्षी इस कमल के ऊपर खेल रहा है। इस प्रकार सज रहे इस कमल को देखकर सुन्दर और चञ्चल आँखों वाले उस प्यारी के मुखड़े की मुझे याद आ रही है।

'खेल रहे खंजन से शोभित कमल देखकर सम्मुख।
सुधि आता है सुन्दर–चञ्चल नयनों वाला प्यारी का मुख ॥'

परिकरः—

'विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः ।'

[ मम्मटः ]

साकूतैः—साभिप्रायैः, विशेषणैः यत् विशेष्यस्याभिधानम्, सः परिकरो नाम अलङ्कारः । यथा—

तव प्रसादात् कुसुमाऽऽयुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणेः
धैर्य्यच्युतिं के मम धन्विनोऽन्ये ? ॥११६॥ [कुमारस०]

अत्र कुसुमाऽऽयुध इति विशेषणं वक्तुर्निःसाराऽऽयुधत्वं द्योतयति, पिनाकपाणेरिति च रुद्रस्य महासाराऽऽयुधत्वम्, इत्युभयं साभिप्रायं विशेषणम् ।

टीका—परिकरमाह—विशेषणैरिति । साकूतैः आकूतेन अभिप्रायेण सह वर्त्तन्ते इति साकूतानि तैः, साभिप्रायैः, विशेषणैः विशेषणद्वारेत्यर्थः, यत् या उक्तिः कथनम्, विशेष्यस्य वर्णनमिति यावत्, स तु परिकरः; यानि विशेषणानि विशेष्यगतमर्थमुत्कर्षयन्ति, तैर्विशिष्य वर्णनं परिकरो नाम अलङ्कार इति भावः ।

तवेति—देवराजं प्रति कामदेवस्येयमुक्तिः । हे देवेन्द्र ! तव प्रसादात् कृपया, कुसुमाऽऽयुधः कुसुमानि एव आयुधानि यस्य तादृशोऽहम् अतिदुर्बलास्त्रोऽपि सन्निति भावः, एकम् अद्वितीयम्, मधुं वसन्तम्, एव सहायं सहचरम्, लब्ध्वा प्राप्य, पिनाकपाणेरपि पिनाकः तदाख्यं धनुः ( 'पिनाकोऽजगवं धनुः' इत्यमरः ) पाणौ हस्ते यस्य तथाभूतस्यापि, किं पुनरिदानीं पिनाकमपहाय शान्तभावेन स्थितवत इत्यपेरर्थः, हरस्य हरति संहरति त्रिलोकीमिति तस्य, त्रैलोक्यसंहारकारिणो रुद्रस्येत्यर्थः, धैर्य्यस्य समाधेः, च्युतिं स्खलनम्, भङ्गमिति यावत्, कुर्य्यां कर्त्तुं शक्नुयामित्यर्थः । अतः, अन्ये तद्भिन्नाः, धन्विनः धनुर्द्धराः, मम के ? न प्रतियोद्धारः इति भावः । अत्र कुसुमाऽऽयुधः इत्यहमित्यस्य, पिनाकपाणेरिति हरस्य च विशेषणं साभिप्रायम् । उपजातिवृत्तम् ॥११६॥

**भाषार्थ**—अभिप्राय वाले—किसी मतलब से प्रयुक्त विशेषणों द्वारा जो कथन किया जाय, उसे 'परिकर' अलङ्कार नाम से कहते हैं । साकूत= किसी विशेष अभिप्राय वाले । विशेषणों से युक्त विशेष्य का जो कथन है, वह परिकर अलङ्कार है । जैसे—हे इन्द्रदेव ! तुम्हारी कृपा से फूलों की तलवार आदि शस्त्रों वाला निराला वीर मैं ( कामदेव ) भी एकमात्र वसन्त की ही सहायता से पिनाक नामक धनुष को धारण करने वाले महादेव के भी छक्के छुड़ा सकता हूँ, फिर और ऐरे गैरे लोगों की तो बात ही क्या है । यहाँ पर कुसुमायुध विशेषण यह बतलाता है कि वक्ता के शस्त्रों में कोई दम नहीं । तथा 'पिनाकपाणि' विशेषण यह सिद्ध करता है कि महादेव अपूर्व धनुर्धर और मज़बूत शस्त्रों वाले हैं । अतः उक्त दोनों विशेषण विशेष अभिप्राय रखते हैं ।

अधिकम्—

**'अधिकं पृथुलाऽऽधारादाधेयाऽऽधिक्यवर्णनम् ।**
**पृथ्वाधेयात् यदाधाराऽऽधिक्यं तदपि तन्मतम् ॥'**

[ चन्द्रालोकः ]

**अतिविपुलस्य आधारस्य अपेक्षया आधेयस्य, अथवा अतिविपुलस्य आधेयस्य अपेक्षया आधारस्य आधिक्यं कविना स्वप्रतिभाद्वारा यदि आविष्क्रियते, तदा अधिकं नाम अलङ्कारः । क्रमेण यथा—**

**युगान्तकालप्रतिसंहृताऽऽत्मनः**
**जगन्ति यस्यां सविकाशमासत ।**
**तनौ ममुस्तत्र न कैटभद्विषः**
**तपोधनाभ्यागमसम्भवा मुदः ॥११७॥** [ शिशुपालव० ]

**किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।**
**अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥११८॥** [ विश्वनाथः ]

**टीका**—अधिकमिति । पृथुलः महान्, विपुल इति यावत्, असौ आधारः अधिकरणं तस्मात् [ ल्यबर्थे पञ्चमी ] विपुलमाधारमपेक्ष्येत्यर्थः यत् आधेयस्य आधिक्यम् अतिशयः, तस्य वर्णनं कविप्रतिभया समर्थनम्, तत् अधिकं

तन्नाख्योऽलंकारः । तथा यत् पृथ्वाधेयात् पृथुलाऽऽधेयापेक्षया, आधारस्य आधिक्यं वर्ण्यमानमिति शेषः, तत् अपि, तत् अधिकम् अधिकालंकार एवेत्यर्थः, मतं कथितम् । एवञ्चायमलंकारो द्विविधः । पृथुलाऽऽधारापेक्षया आधेयाऽऽधिक्यवर्णन-रूपमधिकमुदाहरति—**युगान्तकाले**ति । नारदमुनेः आगमनेन हर्षं प्रकटयतो भगवतः श्रीकृष्णस्य वर्णनमिदम् । युगान्तकाले प्रलयावसरे, प्रतिसंहृताः स्वस्वरूपे स्थापिताः, आत्मानः जीवाः येन तथाविधस्य, कैटभद्विषः श्रीकृष्णस्य, यस्यां तनौ शरीरे, जगन्ति लोकाः, सविकाशं सविस्तरम्, असंकीर्णमिति यावत् यथा तथा आसत स्थितानि आसन् [आसु धातोर्लङि प्रथमपुरुषबहुवचनम्] तत्र तस्यां तनौ भगवतो देहे इति यावत् तपोधनस्य महर्षेर्नारदस्य अभ्यागमः आगमनं तस्मात् सम्भवः उत्पत्तिः यासां तथाभूताः मुदः प्रमोदाः न ममुः नावकाशं प्राप्य तस्थुः, स्थातुमक्षमाः सत्यो बहिर्निःसेरुरिति भावः । अत्र समस्तजगदाधाररूपाया भगवत्तन्वाः अपेक्षया नारदमुनिसमागमजन्याऽऽमोदरूपस्य आधेयस्य 'न ममुः' इत्यनेन आधिक्योक्तेरधिकं नामालङ्कारः । दर्पणकारो विश्वनाथस्तु—इममेव श्लोक-मधिकालङ्कारस्य उदाहरणत्वेन प्रदर्शितवान् । मल्लिनाथस्तु—'चतुर्दशभुवनभरण-पर्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदेनाध्यव-सितत्वादतिशयोक्तिः । सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्ध-रूपा' इति अतिशयोक्त्यलङ्कारं समर्थितवान् । वस्तुतस्तु कविप्रौढोक्तिसिद्धातिशये-नाध्यवसितत्वेन आमोदरूपस्याऽऽधेयस्य आधिक्यसिद्धिरिति अतिशयोक्तिमूलोऽय-मधिकालङ्कार इति सर्वं समञ्जसम् । वंशस्थविलं छन्दः ॥११७॥ **किमिति**—आधेयस्य वैपुल्येऽपि तदुपेक्षयाधारस्याधिक्यवर्णनमिदम् । तथाहि—अस्य वारिधेः समुद्रस्य महिमानं महत्त्वमधिकं विशिष्टं किं ब्रूमः । एतस्मादधिकमस्याधिक्यं वक्तुं न शक्यते इत्यर्थः । किन्तन्महत्त्वं तदाह—यत्र सागरे प्रलयकाले हरिर्विष्णुः भुवनानि चतुर्दशलोकान् कुक्षौ स्वजठरे निक्षिप्य क्षीरसागरे अज्ञात एव महाकटाहे दुग्धपूर्णे पतितमक्षिकावच्छेते निद्राति । चतुर्दशभुवनाधारभूतविष्णुभगवदपेक्षया तदाधारस्य क्षीरार्णवस्याधिक्यवर्णनाल्लक्षणसमन्वयः । आर्यावृत्तम् ॥११८॥

**भाषार्थ**—युगान्तेति—महान् आधार की अपेक्षा आधेय का अधिक वर्णन करना या महान् आधेय की अपेक्षा आधार के आधिक्य का वर्णन करना 'अधिक' अलङ्कार कहलाता है । अर्थात्—अतिविपुल आधार की

अपेक्षा आधेय का आधिक्य वर्णन या अतिमहान् आधेय की अपेक्षा आधार का आधिक्य वर्णन, जो कि कवि की प्रतिभा से उट्टङ्कित हो, 'अधिक' अलङ्कार कहलाता है। जैसे—युगान्तेति। यहाँ आधार की अपेक्षा आधेय का आधिक्य वर्णित है—प्रलयकाल में जिसने सारे जीव जन्तु अपने अन्दर रख लिये हैं, ऐसे कैटभारि भगवान् श्रीकृष्ण के शरीर में तपस्वी नारद जी के आने से उत्पन्न हुई खुशी नहीं समाई। यहाँ विष्णु के व्यापक शरीर से भी आनन्द बड़ा है, यह बतलाया गया है। हर्ष रूप आधेय की अधिकता स्पष्ट है। किमिति—कोई मनुष्य समुद्र की बड़ाई करता है कि इस समुद्र की महिमा का वर्णन कहाँ तक करें। इससे अधिक और समुद्र का महत्त्व क्या होगा कि जिसमें चौदह भुवनों को अपने में लीन करके भगवान् शेषशायी विष्णु जी ऐसे एक तरफ कोने में पड़े रहते हैं कि पता भी नहीं चलता कि वे कहाँ पड़े हैं।

विशेषः—

'विशेषः ख्यातमाधारं विनाऽप्याधेयवर्णनम्।
विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते।
किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः॥'

[चन्द्रालोकः]

आधारमवर्णयित्वैव यदि आधेयं वर्ण्यते, यद्वा यदि एकं यत् किमपि वस्तु अनेकत्र वर्ण्यते, अथवा यस्य कस्यापि वस्तुनः आरम्भेण अन्यस्य अशक्यस्य वस्तुनः कृतिः—वर्णनया निर्माणमपि विशेषनामालङ्कारः। क्रमेणोदाहरणम्—

दिवमप्युपयातानाम् आकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥११९॥

[अलङ्कारसर्वस्वम्]

अत्राऽऽधारभूतकविजनानां स्वर्गगतत्वेन तद्वर्णनं विनैव आधेयभूतानां तद्गिरां वर्णनम्।

कानने सरिदुद्देशे गिरीणामपि कन्दरे।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः॥१२०॥

गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ? ॥१२१॥ [ रघु० ]

**टीका**—विशेष इति । ख्यातं प्रसिद्धम्, आधारं विना अपि एव, आधेयस्य वर्णनं विशेषः, तदाख्योऽलङ्कारः । अथवा—यदि एकं वस्तु अनेकत्र अनेकेषु वस्तुषु, वर्ण्यते कथ्यते, सोऽपि विशेषः । यद्वा—किञ्चित् आरम्भतः विधानोद्योगात्, प्राथमिकात् यत्नादिति यावत्, अशक्यस्य दुःसाध्यस्य, वस्त्वन्तरस्य अन्यस्य पदार्थस्य, कृतिः सम्पादनञ्च, सः विशेषनामालङ्कारः । आधारमन्तरा आधेयवर्णनात्मकं विशेषमुदाहरति—**दिवमिति** । दिवं सुरलोकम् ['सुरलोको द्योदिवौ द्वे स्त्रियौ' इत्यमरः], उपयातानां प्राप्तानामपि, मृतानामपीति यावत्, येषां कवीनाम्, अनल्पाः बहवः, गुणानां माधुर्यौजःप्रभृतीनाम्, गणाः समूहाः यासां तादृश्यः, गिरः वचांसि, काव्यानीति यावत्, आकल्पं प्रलयावधि, जगन्ति लोकान्, रमयन्ति आमोदयन्ति, ते कवयः कथमिव कथं न वन्द्याः ? न वन्दनीयाः ? येषां मृतानामपि वचनानि लोकस्य आमोदं जनयन्ति, ते कवयः सर्वेषामेव वन्दनीयाः इति भावः । यानि येषां वाक्यानि, तानि तेषामसत्त्वेऽपि लोकान् आमोदयन्तीत्याधारभूतकवीनामभावे तद्वचनरूपाऽऽधेयस्थित्युक्तेर्विशेषः । आर्या वृत्तम् ॥११९॥ एकस्य वस्तुनोऽनेकगोचरतावर्णनाऽऽत्मकं विशेषमुदाहरति—**कानने** इति । कस्यचित् नृपतेः प्रतापवर्णनमिदम् । हे नरेन्द्र ! रिपवः शत्रवः, एकं त्वां कानने वने, सरितां नदीनाम्, उद्देशे अवकाशे प्रदेशे इति भावः, गिरीणां पर्वतानाम्, कन्दरेऽपि गुहायामपि, अन्तकः कालः, तस्य सङ्काशं सदृशं, पुरः अग्रतः पश्यन्ति । अनुष्टुप् ॥१२०॥ **गृहिणीति**—इन्दुमतीमरणेऽजस्य विलापोक्तिरियम् । हे प्रिये ! त्वं मे गृहिणी भार्या, सचिवः, मिथः एकान्ते सखी, ललिते कलाविधौ नृत्यनृत्तगीतवादित्रालेख्यप्रभृतिरम्यकलासु प्रियशिष्याऽभूः । करुणाविमुखेन निष्करुणेन मृत्युना त्वां हरता वद मे किं न हृतमाच्छिन्नम्, सर्वमेव बलान्मुषितमित्यर्थः । अत्रैकेन गृहिणीहरणेनैव सचिवाद्यशक्यवस्तूनामपहारः कृत इति लक्षणसमन्वयः । इदं पद्यं पूर्वमपि व्याख्यातम् । वियोगिनी वृत्तम् ॥१२१॥

भावार्थ—विशेष इति—प्रसिद्ध आधार के बिना आधेय का वर्णन करना विशेष अलङ्कार है। (२) एक वस्तु का अनेक स्थलों पर वर्णन करना दूसरा विशेष है (३) किसी वस्तु को करते हुए अशक्य अन्य वस्तु का हो जाना भी विशेष है। (१) आधार का वर्णन बिना किये ही यदि आधेय का वर्णन किया जावे (२) यदि एक वस्तु को अनेक स्थानवर्ती बतलाया जावे (३) या जिस किसी आरब्ध कार्य से अशक्य वस्त्वन्तर की प्राप्ति हो जावे या निर्माण हो जावे तो विशेष नामक अलङ्कार होता है। जैसे— दिवमिति। स्वर्ग में चले जाने पर ( मरण के अनन्तर ) भी जिनके गुणगण कल्प की समाप्तिपर्यन्त संसार भर को प्रसन्न किया करते हैं, उन अद्भुत गुणशाली कवि लोगों को कौन प्रणाम न करेगा। यहाँ आधारभूत कवि लोगों के मर जाने के कारण उनकी भूलोक पर स्थिति वर्णित नहीं की पर उनकी वाणी ( काव्यों ) की भूलोकस्थिति वर्णित की है। अतः आधार के बिना ही आधेय वर्णित किया गया है। कानन इति—हे राजन्! तुम्हारे शत्रुगण तुम को जंगल में, नदियों के डेल्टों में, पहाड़ों की खोहों में, सब जगह यमराज के समान सामने घूमता हुआ सा समझते हैं। गृहिणीति-- इन्दुमती के मरने पर अज विलाप कर रहा है कि तुझ अकेली को मुझ से हरकर निष्करुण मृत्यु ने मेरा सर्वनाश कर दिया है। मेरा मन्त्री, मेरे मित्र, मेरे चेले-चेलियों को, जो ललित कला में निपुण थे, उन सब को हर लिया। यह 'एकलोष्टवध' न्याय है।

परिवृत्तिः—

**'अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता।'**

[ दण्डी ]

**समस्य न्यूनस्य अधिकस्य वा पदार्थस्य समेन अधिकेन न्यूनेन वा पदार्थान्तरेण परिवर्त्तनं परिवृत्तिः। क्रमेण यथा—**

**तदा भगवता तेन दृष्टिं दत्त्वा रणाङ्गणे।**
**गृहीतं जीवितं तेषामचिरात् परिपन्थिनाम् ॥१२२॥**

[ सरस्वतीकण्ठाभरणम् ]

**किमित्यपास्याऽऽभरणानि यौवने**
**धृतं त्वया वार्द्धकशोभि वल्कलम् ?।**

वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ? ॥१२३॥ [ कुमारस० ]

तस्य च प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्ज्जरकलेवरव्ययात्
क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥१२४॥

[ अलङ्कारसर्वस्वम् ]

**एषु उदाहरणेषु क्रमेण दृष्टिजीवितयोः समत्वेन, आभरण-वल्कलयोरधिकन्यूनत्वेन, जर्ज्जरकलेवरयशसोर्न्यूनत्वेन अधिकत्वेन च विनिमयः ।**

**टीका**—यः अर्थानां पदप्रतिपाद्यार्थविशेषाणां विनिमयो व्यतिहारः अन्योन्यं गुणक्रियादिपरिवृत्तिः सा नाम्ना परिवृत्तिरलङ्कारः प्रोक्त इत्यर्थः । समेन समस्य विनिमयाऽऽत्मकं परिवृत्त्यलङ्कारमुदाहरति—**तदे**ति । जरासन्धेन सह श्रीकृष्णस्य संग्रामवृत्तवर्णनमिदम् । तेन भगवता श्रीकृष्णचन्द्रेण, तदा जरासन्धेन युद्धावसरे, रणाङ्गणे संग्रामभूमौ, दृष्टिं दत्त्वा शत्रून् प्रति दृष्टिं प्रदाय, शत्रुषु दृष्टिपात-मात्रं कृत्वेति भावः, तेषां जरासन्धानुयायिनां परिपन्थिनाम् शत्रूणाम्, जीवितं प्राणाः, अचिरात् झटिति, तत्क्षणादिति भावः, गृहीतं गृहीता हृता इति भावः । अत्र दृष्टेर्जीवितस्य च समानतया जीविताऽऽदानेन दृष्टेर्दानम्, समेन समस्येति बोध्यम् । अनुष्टुप् ॥१२२॥ अधिकेन न्यूनस्य विनिमयाऽऽत्मकं परिवृत्त्यलङ्कारमुदाहरति—**किमिती**ति । पार्वतीं प्रति वटुरूपिणः महादेवस्योक्तिः । हे गौरि ! यौवने युवावस्था-याम्, आभरणानि आभूषणानि, अपास्य त्यक्त्वा, किमिति कथम्, केन हेतुनेति यावत्, त्वया, वार्द्धकशोभि वार्द्धकं वृद्धावस्था [ 'द्वन्द्वमनोज्ञादिभ्यश्च' इति मनोज्ञा-दित्वाद्वुञ् । 'वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्म्मणि' इति विश्वः ] तत्र शोभते इति तथोक्तम्, वृद्धावस्थायामेव धार्य्यमिति भावः, वल्कलं वृक्षत्वक् धृतम् ? स्फुटाः सप्रकाशाः, चन्द्रश्च तारकाश्च यत्र तादृशी, विभावरी रात्रिः, प्रदोषे रात्रिप्रारम्भे, अरुणाय सूर्य्यसूताय कल्पते यदि ? अरुणं गन्तुं कल्पते किम् ? वद ब्रूहि । दीप्य-मानशशाङ्कतारके प्रदोषे यद्यरुण उदेति, तदा विभूषणापहारेण तव वल्कलधारणं सङ्गच्छते इति भावः । यथा प्रदोषे प्रभातासम्भवः, तथा यौवने वार्द्धकासम्भव इति

यौवनोचितानामाभरणानां त्यागः, वार्द्धकोचितस्य वल्कलस्य च धारणमनुचितमित्याकूतम्। अत्राधिकेन आभरणरूपेण वस्तुना वल्कलरूपस्य न्यूनस्य वस्तुनो विनिमयः। वंशस्थविलं वृत्तम् ॥१२३॥ अधिकस्य न्यूनेन विनिमयाऽऽत्मकं परिवृत्त्यलङ्कारमुदाहरति—**तस्य चेति**। येन जटायुषा, जर्जरस्य जरायस्तस्य, कलेवरस्य शरीरस्य, व्ययात् दानात्, इन्दोः चन्द्रमसः किरणवत् उज्ज्वलं निर्मलम्, यशः कीर्त्तिः, क्रीतं गृहीतम्, तस्य (अस्येति पाठान्तरम्) च प्रवयसः वृद्धस्य, अधुना सम्प्रति, स्वर्गिणः स्वर्ग प्राप्तस्य, जटायुषः जटायोः सम्बन्धे (अत्र सम्बन्धविवक्षया षष्ठीति वक्तव्यम्) किमिव कथमित्यर्थः, शोच्यते शोकः क्रियते ? यः स्वयं जीर्णं शरीरं विसृज्य दिव्यं यशो लब्धवान्, तस्यास्य जटायुषः शोको न करणीय इति भावः। अत्र जीर्णशरीररूपेण न्यूनेन वस्तुना निर्मलयशःस्वरूपस्याधिकस्य वस्तुनो विनिमयः। रथोद्धता वृत्तम् ॥१२४॥

**भावार्थ**—अर्थानामिति—जो कि पदार्थों का परस्पर अदले बदले में लेना देना है, इसका नाम 'परिवृत्ति' है। वह सम का सम से परिवर्तन, न्यून का अधिक से परिवर्तन, अधिक का न्यून से परिवर्तन—इस प्रकार तीन प्रकार की है। जैसे—तदेति। तब भगवान् श्रीकृष्णचन्द्र जी ने रणभूमि में दृष्टि (ध्यान) देकर उन शत्रुओं के प्राणों को हर लिया। यहाँ पर दृष्टि और प्राणों में जीवनहेतुतया साम्य है, यद्यपि अवान्तर भेद अवश्य है। अतः सम का सम से परिवर्तन है। किमिति—वटुवेषधारी महादेव जी पार्वती से कहते हैं कि अरी भोली भाली पार्वती! तूने इस जवानी में आभूषणों को त्याग कर बुढ़ापे में धारण करने योग्य इन वल्कलों को क्यों धारण कर लिया? तू ही बतला कि क्या चन्द्रमा और तारों से शोभित होने वाले प्रदोष काल के समग्र रात्रि के प्रारम्भ में अरुणोदय हो सकता है? कदापि नहीं। जिस प्रकार प्रदोष के समय रात्रि में अरुणोदय अयोग्य है—असंगत है क्योंकि वह तो रात्रि के समाप्त होने पर रात्रि की वृद्धावस्था में ही होता है, रात्रि की प्रारम्भावस्था—यौवनावस्था में नहीं होता है—प्रदोष के समय तो रात्रि चाँद और तारों के गहने पहन कर सजती है, उसी प्रकार इस यौवनारम्भ में तुझे वल्कल धारण करना अयुक्त है (तू चन्दन की लकड़ियों से प्याज का शाक पका रही है), यह सब नितान्त असंगत है। यहाँ कीमती आभूषणों को देकर उनके बदले में वल्कल जैसी तुच्छ वस्तु

ली है। अतः उत्कृष्ट से न्यून का परिवर्तन है। तस्येति—उस बूढ़े जटायु का शोक करना व्यर्थ है क्योंकि वह स्वर्ग को प्राप्त हुआ है तथा उसने अब नहीं तो दो चार साल बाद सही, बूढ़ा होने से मरना तो था ही पर अपना जराजर्जर कलेवर देकर चन्द्रकिरणों के समान उज्ज्वल यश कमा लिया। इन उदाहरणों में जैसा बतलाया जा चुका है, दृष्टि और जीवित दोनों सम हैं। आभरण और वल्कल क्रमशः अधिक और न्यून हैं। जर्जर शरीर और यश दोनों क्रम से न्यून और अधिक हैं।

पर्य्यायः—

'एकं क्रमेणानेकस्मिन् पर्य्यायोऽन्यस्ततोऽन्यथा।'

[ मम्मटः ]

यत्र एकं वस्तु अनेकविधे वस्तुनि, अनेकविधं वा वस्तु एकस्मिन् वस्तुनि भवति क्रियते वा, स पर्य्यायः। तथा च—एकस्य वस्तुनः अनेकगोचरभवनाऽऽत्मा, अनेकगोचरकरणाऽऽत्मा चेति द्विविधः पर्य्यायः, तथा अनेकस्य वस्तुनः एकगोचरभवनाऽऽत्मा, एकगोचरकरणाऽऽत्मा चेति द्विविधः साकल्येन चतुर्विधः पर्य्याय इति हृदयम्। क्रमेण यथा—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
बलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदबिन्दवः ॥१२५॥ [ कुमारस० ]

विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुराऽऽदानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥१२६॥ [ कुमारस० ]

मधुरिमरुचिरं वचः खलानाम्
अमृतमहो! प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालहलं विषं तदेव ॥१२७॥ [ मम्मटः ]

तन्नेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती, नदन्ति करिणामेता घनाऽऽभा घटाः।
स क्षुद्रो मुषलध्वनिः, कलमिदं सङ्गीतकं योषिताम्
आश्चर्य्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥१२८॥
[ मम्मटः ]

टीका—एकमिति—एकं वस्तु इति शेषः, अनेकस्मिन् अनेकविधे वस्तुनि, अनेकेषु वस्तुषु इति यावत्, क्रमेण भवति क्रियते वा यत्र सः इति शेषः, पर्य्यायः तन्नामालङ्कारः। ततः तस्मात् एवंविधात् पर्य्यायादिति यावत्, अन्यथा प्रकारान्तरेण, यत्र अनेकं वस्तु एकस्मिन् वस्तुनि क्रमेण भवति क्रियते वा तादृशः अपि पर्यायस्तन्नामालङ्कारो भवति। तथा चतुर्विधः पर्यायालङ्कारो भवति। एतच्च मूल एव स्पष्टीकृतम्। एकस्य वस्तुनोऽनेकत्रावस्थान(भवन)रूपं प्रथमं पर्य्यायमुदाहरति—**स्थिता** इति। समाध्यवस्थायां पार्वत्याः शरीरोपरि पतितस्य वृष्टिसलिलस्य वर्णनमिदम्। प्रथमोदबिन्दवः प्रथमे प्रथमं पतिताः उदबिन्दवः वृष्टिजलकणाः तस्याः समाधिस्थायाः पार्वत्या इत्यर्थः, पक्ष्मसु नेत्राऽऽवरकाणां लोम्नामुपरिभागे, क्षणं न तु ततोऽधिककालपर्य्यन्तमिति भावः, स्थिताः स्थितिं गताः [ 'स्थिताः' इत्यनेन पक्ष्मणां सान्द्रत्वम्, 'क्षणम्' इति स्निग्धत्वञ्च गम्यते ] ताडितः पतनाऽऽघातेन पीडितः, अधरः ओष्ठः यैः तथाभूताः [ एतेन अधरस्य मार्दवं गम्यते ], पयोधरयोः स्तनयोः उत्सेधे उच्छ्राये, उन्नतपयोधरे इति यावत्, निपातेन निपतनेन, चूर्णिताः विशीर्णाः, काठिन्यादिति भावः, वलीषु त्रिबल्याम्, स्खलिताः पतिताः सन्तः, निम्नोन्नतत्वादिति भावः, क्रमेण आनुपूर्व्येण [ अत्र 'चिरेण' इति पाठे विलम्बेन, न तु शीघ्रम् प्रतिबन्धबाहुल्यादिति भावः ] नाभिं प्रपेदिरे प्रापुः, न तु निर्जग्मुः इति भावः [ एतेन नाभेः गाम्भीर्य्यं गम्यते ]। अत्र प्रथमोदबिन्दुरूपस्य एकस्य वस्तुनः पक्ष्माधरपयोधरबलीनाभिरूपानेकवस्तुगोचरभवनाऽऽत्मना वर्णनम्। अत्र कश्चिदाह—यत्तु मल्लिनाथेन 'अत्र प्रतिपदमर्थवत्त्वात् परिकरालङ्कारः' इत्युक्तम्, तदयुक्तम्, 'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः' इत्याद्युक्त्या विशेष्यपदानां साभिप्रायविशेषणानुगततया उक्तावेव परिकरस्याङ्गीकारात्, अत्र च 'बिन्दवः' इति विशेष्यपदस्य 'ताडिताधराः' इत्यादिविशेषणानां 'प्रपेदिरे' इत्यत्राभिप्रायशून्यत्वात्। इति। वंशस्थविलं छन्दः ॥१२५॥

ली है। अतः उत्कृष्ट से न्यून का परिवर्तन है। तस्येति—उस बूढ़े जटायु का शोक करना व्यर्थ है क्योंकि वह स्वर्ग को प्राप्त हुआ है तथा उसने अब नहीं तो दो चार साल बाद सही, बूढ़ा होने से मरना तो था ही पर अपना जराजर्जर कलेवर देकर चन्द्रकिरणों के समान उज्ज्वल यश कमा लिया। इन उदाहरणों में जैसा बतलाया जा चुका है, दृष्टि और जीवित दोनों सम हैं। आभरण और वल्कल क्रमशः अधिक और न्यून हैं। जर्जर शरीर और यश दोनों क्रम से न्यून और अधिक हैं।

पर्य्यायः—

'एकं क्रमेणानेकस्मिन् पर्य्यायोऽन्यस्ततोऽन्यथा।'

[ मम्मटः ]

यत्र एकं वस्तु अनेकविधे वस्तुनि, अनेकविधं वा वस्तु एकस्मिन् वस्तुनि भवति क्रियते वा, स पर्य्यायः। तथा च—एकस्य वस्तुनः अनेकगोचरभवनाऽऽत्मा, अनेकगोचरकरणाऽऽत्मा चेति द्विविधः पर्य्यायः, तथा अनेकस्य वस्तुनः एकगोचरभवनाऽऽत्मा, एकगोचरकरणाऽऽत्मा चेति द्विविधः साकल्येन चतुर्विधः पर्य्याय इति हृदयम्। क्रमेण यथा—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
बलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदबिन्दवः ॥१२५॥ [ कुमारस० ]

विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुराऽऽदानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयो तया करः ॥१२६॥ [ कुमारस० ]

मधुरिमरुचिरं वचः खलानाम्
अमृतमहो! प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालहलं विषं तदेव ॥१२७॥ [ मम्मटः ]

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती, नदन्ति करिणामेता घनाऽऽभा घटाः।
स क्षुद्रो मुषलध्वनिः, कलमिदं सङ्गीतकं योषिताम्
आश्चर्य्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥१२८॥
[ मम्मटः ]

**टीका**—एकमिति—एकं वस्तु इति शेषः, अनेकस्मिन् अनेकविधे वस्तुनि, अनेकेषु वस्तुषु इति यावत्, क्रमेण भवति क्रियते वा यत्र सः इति शेषः, पर्य्यायः तन्नामालङ्कारः। ततः तस्मात् एवंविधात् पर्य्यायादिति यावत्, अन्यथा प्रकारान्तरेण, यत्र अनेकं वस्तु एकस्मिन् वस्तुनि क्रमेण भवति क्रियते वा तादृशः अपि पर्यायस्तन्नामालङ्कारो भवति। तथा चतुर्विधः पर्यायालङ्कारो भवति। एतच्च मूल एव स्पष्टीकृतम्। एकस्य वस्तुनोऽनेकत्रावस्थान(भवन)रूपं प्रथमं पर्य्यायमुदाहरति—**स्थिता** इति। समाध्यवस्थायां पार्वत्याः शरीरोपरि पतितस्य वृष्टिसलिलस्य वर्णनमिदम्। प्रथमोदबिन्दवः प्रथमे प्रथमं पतिताः उदबिन्दवः वृष्टिजलकणाः तस्याः समाधिस्थायाः पार्वत्या इत्यर्थः, पक्ष्मसु नेत्राऽऽवरकाणां लोम्नामुपरिभागे, क्षणं न तु ततोऽधिककालपर्य्यन्तमिति भावः, स्थिताः स्थितिं गताः [ 'स्थिताः' इत्यनेन पक्ष्मणां सान्द्रत्वम्, 'क्षणम्' इति स्नैग्ध्यञ्च गम्यते ] ताडितः पतनाऽऽघातेन पीडितः, अधरः ओष्ठः यैः तथाभूताः [ एतेन अधरस्य मार्दवं गम्यते ], पयोधरयोः स्तनयोः उत्सेधे उच्छ्राये, उन्नतपयोधरे इति यावत्, निपातेन निपतनेन, चूर्णिताः विशीर्णाः, काठिन्यादिति भावः, वलीषु त्रिवल्याम्, स्खलिताः पतिताः सन्तः, निम्नोन्नतत्वादिति भावः, क्रमेण आनुपूर्व्येण [ अत्र 'चिरेण' इति पाठे विलम्बेन, न तु शीघ्रम् प्रतिबन्धबाहुल्यादिति भावः ] नाभिं प्रपेदिरे प्रापुः, न तु निर्जग्मुः इति भावः [ एतेन नाभेः गाम्भीर्य्यं गम्यते ]। अत्र प्रथमोदबिन्दुरूपस्य एकस्य वस्तुनः पक्ष्माधरपयोधरवलीनाभिरूपानेकवस्तु-गोचरभवनाऽऽत्मना वर्णनम्। अत्र कश्चिदाह—यत्तु मल्लिनाथेन 'अत्र प्रतिपदमर्थवत्त्वात् परिकरालङ्कारः' इत्युक्तम्, तदयुक्तम्, 'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः' इत्याद्युक्त्या विशेष्यपदानां साभिप्रायविशेषणानुगततया उक्तावेव परिकर-स्याङ्गीकारात्, अत्र च 'बिन्दवः' इति विशेष्यपदस्य 'ताडिताधराः' इत्यादि-विशेषणानां 'प्रपेदिरे' इत्यत्राभिप्रायशून्यत्वात्। इति। वंशस्थविलं छन्दः ॥१२५॥

एकस्य वस्तुनः अनेकत्र करणाऽऽत्मकं पर्य्यायमुदाहरति—**विसृष्टे**ति। तया पार्वत्या, विसृष्टरागात् त्यक्तलाक्षारसरञ्जनात्, अधरात् अधरोष्ठात्, निवर्त्तितः परावर्त्तितः, तथा स्तनाङ्गरागेण अरुणितात् अरुणीकृतात्, पतनसमये तस्य स्तनयोः उपरोधादिति भावः, कन्दुकात् च, निवर्त्तित इति पूर्वेणान्वयः, कुशाङ्कुराणाम् आदानेन उत्पाटनकर्मणा परिक्षताः व्रणिताः, अङ्गुलयो यस्य स तथोक्तः, करः हस्तः, अक्षसूत्रस्य रुद्राक्षमालायाः, प्रणयी सहचरः, कृतः। अत्र कररूपस्यैकस्य वस्तुनः अधरकन्दुककुशाङ्कुराक्षसूत्ररूपानेकवस्तुगतकरणम्। वंशस्थविलं वृत्तम् ॥१२६॥ अनेकस्य वस्तुन एकत्र भवनाऽऽत्मकं पर्य्यायमुदाहरति—**मधुरिमे**ति। अहो! इति विस्मये। खलानां दुष्टानाम्, वचः वचनम्, प्रथमं मधुरिम्णा माधुर्य्येण, रुचिरं चित्ताऽऽकर्षकं सत्, पृथु विपुलम्, अत्यन्तामिति यावत्, अमृतं व्यनक्ति प्रकटयति। अथ तदेव खलानां वचः एव, अन्तर्गतं पीतमित्यर्थः, हालहलं विषमिव ['हालाहलं हालहलं विषम्' इति त्रिकाण्डशेषः] मोहहेतुं मोहस्य चित्तनाशस्य हेतुं कारणताम् [भावप्रधानो निर्देशः] कथयति। अत्र खलवचनरूपस्य वस्तुनः अमृत-हालाहलरूपेण परिणमनम्। पुष्पिताग्रावृत्तम् ॥१२७॥ अनेकरूपस्य वस्तुनः एकत्र करणरूपं पर्य्यायमुदाहरति—**तद्गेहमि**ति। कस्यापि दरिद्रब्राह्मणस्य सम्पत्तिं दृष्ट्वा कस्यचिदुक्तिरियम्। तत् यन्मया दृष्टपूर्वं तदित्यर्थः, गेहं गृहम्, नतभित्ति नता अवनता पतनोन्मुखीभूता इत्यर्थः, भित्तिः यस्य तादृशम्, आसीदिति शेषः। इदं प्रत्यक्षभूतम्, मन्दिरं गृहम्, दिवः स्वर्गस्य, लब्धावकाशं तत्स्पर्शीति भावः। सा दृष्टपूर्वा, जरती वृद्धा, धेनुः गौः, आसीदिति पूर्ववदध्याहार्य्यम्। एताः प्रत्यक्षभूताः, करिणां हस्तिनाम्, घनाऽऽभाः, मेघाऽऽडम्बरतुल्याः, घटाः समूहाः, नदन्ति गर्जन्ति। सः श्रुतपूर्वः, क्षुद्रः तुच्छः, मुषलध्वनिः मुषलस्य शब्दः, आसीदिति शेषः। इदं श्रूयमाणम्, पुनरिति शेषः, योषितां प्रमदानाम्, कलं मधुरम्, सङ्गीतकं साधु गानम्, श्रूयते इति शेषः। आश्चर्य्यम्, दिवसैः कतिपयैरेवेति शेषः, अयं द्विजः ब्राह्मणः, इयतीम् एतावतीम्, भूमिं कक्षाम्, उन्नतदशामिति यावत्, समारोपितः प्रापितः, विधात्रेति शेषः। अत्र दारिद्र्यकालीनानां नतभित्तिगेहाऽऽदीनां स्मरणम्, तत्स्थाने मन्दिराऽऽदीनामनुभूयमानत्वं समर्थितम्। ततश्च नतभित्तिमन्दिराऽऽदीनाम् अनेकेषाम् एकत्रैव द्विजे स्वामित्वसम्बन्धेन करणम्। शार्दूलविक्रीडितं वृत्तम् ॥१२८॥

**भावार्थ**—एकमिति। **जहाँ पर एक वस्तु क्रम से अनेकों में हो अर्थात् या तो स्वतः अनेकवर्ती हो या कविप्रतिभा द्वारा की गई हो तो**

पर्यायालङ्कार होता है। तथा इससे अन्यथा अर्थात् जहाँ अनेक वस्तु एक में स्वतः हो या की गई हो तौ भी पर्यायालङ्कार होता है। इस प्रकार यह अलङ्कार चार प्रकार का है। अर्थात् जहाँ एक प्रकार की वस्तु अनेक प्रकार की वस्तुओं में रहे या रक्खी जावे। इसी प्रकार जहाँ पर अनेक प्रकार की वस्तु एक प्रकार की वस्तु में रहें या रक्खी जावें, वहाँ 'पर्याय' नामक अलङ्कार होता है। तथा च—(१) एक वस्तु का अनेक वस्तु विषय भवनात्मक (२) एक वस्तु का अनेक वस्तु विषय करणात्मक (३) अनेक वस्तु का एक वस्तु विषय भवनात्मक। (४) अनेक वस्तु का एक वस्तु विषय करणात्मक—इन भेदों से पर्याय चार प्रकार का है। क्रम से उदाहरण जैसे—स्थिता इति। पार्वती की तपस्या का वर्णन है कि जब वह समाधि में बैठी तप कर रही थी तब पहली वर्षा की जो बूँदें ऊपर से उस पर गिरीं, वे सिर से ढलकती हुईं आँखों की पलकों पर आईं, फिर अधर ओष्ठ पर आकर टकराईं। वहाँ से गिर कर ऊँचे, स्तनद्वय से टक्कर खाकर चूर चूर हो गईं। फिर पेट की सलवटों में होती हुईं नाभिकुहर में आकर विलीन हो गईं अर्थात् उसकी नाभि गहरी थी। अन्य शब्दों का भाव संस्कृत टीका में देखिए। यहाँ पर एक ही वर्षा की बूँद अनेक स्थानों पर स्थित हो रही है। विसृष्टेति—पार्वती ने अपने होठों को रंगना छोड़ दिया है। गेंद खेलने का शौक और स्तनों पर अङ्गराग लगाने की लालसा भी दूर भगा दी है। अब तो उसके हाथ के दो ही काम रह गये हैं—कुशाओं को तर्पण तथा मृगों को खिलाने के लिये उखाड़ना और रुद्राक्ष की माला फेरना। यहाँ पर एक ही हाथ अनेक स्थानगत कर दिया गया है। मधुरिमेति—खलों के वचन पहले-पहल माधुर्य से सने हुए होते हैं तथा कानों में अमृत को टपकाते हैं पर बाद में जब उन शब्दों के ऊपर एकान्त में ध्यान देकर विचार किया जाता है या उन शब्दों के वशीभूत होकर परिणाम सहना पड़ता है तब हालाहल (विष) पी लेने पर जैसा (सौ बोतलों का) नशा होता है, वैसा ही मोह खल वचनों पर चलने पर—उनके अनुकूल चलने पर होता है। चालाक, धूर्त, खलों से ठगा मनुष्य बाद में हाथ मलता और अपनी मूर्खता पर पछताता है। यहाँ पर बिना ही कारण के एक खलवचन को अमृत तथा विषरूप अनेक वस्तु स्वरूप बताया गया है। अतः पूर्व से विपरीत पर्यायालङ्कार है। तदिति—वह मकान तो ऐसा था कि जिसकी

दीवालें गिराऊ हो रही थीं पर यह भवन तो गगनचुम्बी है। वह एक बूढ़ी गाय ही इसके पास थी पर आज इसके मकान पर मेघमाला के समान काले काले हाथियों का झुण्ड झूम रहा और शब्द कर रहा है। वह एक मूसल की धूँ धूँ की आवाज इसके मकान से आया करती थी पर आज अनेकों स्त्रियों के गाने की आवाज आ रही है। आश्चर्य की बात है कि कुछ ही दिनों में श्रीकृष्ण की कृपा से सुदामा के घर का ढाँचा ही बदल गया है तथा यह एक धनी मानी पुरुष बना दिया गया है। यहाँ पर एक ही ब्राह्मण में नतभित्ति ( झुकी दीवाल ) तथा विशालभवनादि की स्वामिता कही गई है।

परिसङ्ख्या—

'प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसङ्ख्या' चतुर्भेदा दर्पणे समुदीरिता ॥

प्रश्नं कृत्वा प्रश्नमकृत्वा वा शब्दसाहाय्येन अर्थसामर्थ्याद्वा कस्माच्चित् वस्तुनः कस्यचिद्वस्तुनः व्यवच्छेदः यदा प्रदर्श्यते, तदा परिसङ्ख्या नाम अलङ्कारः। अयञ्च प्रश्नपूर्वकं कस्माच्चित् वस्तुनः कस्याचिद्वस्तुनः शाब्दः व्यवच्छेदरूप इत्येकः, आर्थः पुनः द्वितीयः, एवं प्रश्नमन्तरा कस्माच्चित् वस्तुनः कस्यचित् वस्तुनः शाब्दः व्यवच्छेदरूप इति तृतीयः, आर्थः पुनश्चतुर्थः, साकल्येन चतुर्भेदः। क्रमेण यथा—

किं भूषणं सुदृढमत्र ? यशः, न रत्नं,
किं कार्य्यम् ? आर्य्यचरितम् सुकृतं, न दुष्टम् ।
किं चक्षुरप्रतिहतम् ? धिषणा, न नेत्रं,
जानाति कस्त्वदपरः सदसद्विवेकम् ? ॥१२६॥

अत्र किमिति प्रश्नपूर्वकं यश आदेः रत्नाऽऽदेः व्यवच्छेदः शाब्दः, नञा साक्षात् तस्याभिधानात् ।

किमासेव्यं पुंसाम् ? सविधमनवद्यं द्युसरितः,
किमेकान्ते ध्येयम् ? चरणयुगलं कौस्तुभभृतः ।

किमाराध्यम् ? पुण्यं, किमभिलषणीयञ्च ? करुणा,
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥१३०॥

[ अलङ्कारसर्वस्वम् ]

अत्र प्रतिषेधकस्य नञः व्यवच्छेद्यस्य पानगोष्ठ्यादेश्च शब्देनानुपात्तत्वात् किम्पदेन प्रश्नपूर्वकम् आर्थो व्यपोहः ।

भक्तिर्भवे, न विभवे, व्यसनं शास्त्रे, न युवतिकामास्त्रे ।
चिन्ता यशसि, न वपुषि, प्रायः परिदृश्यते महताम् ॥१३१॥

अत्र किमादेरभावात् प्रश्नाभावः, अथापि विभवाऽऽदेर्व्यवच्छेदो यः, स शाब्दः, नञा तदभिधानात् ।

सोऽर्थो यो निजहस्ते, तन्मित्रं यन्निरन्तरं व्यसने ।
तद्रूपं यत्र गुणाः, तद्विज्ञानञ्च यत्र धर्मः स्यात् ॥१३२॥

अत्र व्यवच्छेद्यस्य व्यवच्छेदकस्य च अनुपादानात् आर्थः ।

**टीका**—प्रश्नादिति—प्रश्नादित्यस्य प्रश्नं कृत्वेत्यर्थः । एवम् अप्रश्नादित्यस्यापि प्रश्नमकृत्वेत्यर्थः । कथितादुत्तररूपेण प्रतिपादिताद् वस्तुनो यदि तादृशोऽन्यस्य तत्समस्य द्वितीयस्य व्यपोहः व्यावृत्तिः, व्यतिरेकः शाब्दः शब्दप्रतिपाद्यः, आर्थः अर्थगम्यो वा भवेत्तर्हि 'परिसंख्या' नामकोऽलङ्कारो भवति । इति । **किं भूषणमिति**—अस्मिन् पद्ये प्रश्नप्रतिवचने स्तः । अत्र अस्मिन् लोके, सुदृढं भूषणं किम् ? किमस्ति ? यशः सुख्यातिः, भूषणमिति शेषः, न न तु, रत्नम्, भूषणमिति पूर्ववत् शेषो बोध्यः ( इदमुत्तरम् ) । किं किंस्वरूपम्, आर्य्यचरितं सतां चरित्रं कार्य्यम् ? अनुकरणीयम् ? सुकृतम् उत्तमम्, आर्य्यचरितं कार्य्यमिति शेषः, दुष्टं निन्दितं आर्य्यचरितं न कार्य्यमिति शेषः ( इदमुत्तरम् ) । अप्रतिहतं दिव्यम्, सर्वतः प्रसारीति यावत्, चक्षुः नेत्रम्, किम् ? धिषणा बुद्धिः, अप्रतिहतं चक्षुरिति शेषः । नेत्रं बहिर्मात्रदर्शी चक्षुरिन्द्रियम्, न अप्रतिहतं चक्षुः नास्ति । कुतः, तस्यान्तर्दर्शनाशक्तेरिति भावः । इत्येवमुत्तरं श्रुत्वा प्रसन्नः सन् उत्तरदातारं प्रशंसति-त्वदपरः त्वद्भिन्नः, सदसतोः साध्वसाध्वोः, विवेकं पार्थक्यम्, कः जानाति ? न कोऽपि त्वां विना एवं सदुत्तरं दातुं समर्थ इति भावः । वसन्ततिलकं वृत्तम् ॥१२९॥ **किमासेव्यमिति**—पुंसां मनुष्याणाम्, आसेव्यम् सेवनीयम्, किमिति प्रश्ने उत्तरयति—द्युसरितः स्वर्णद्याः गङ्गाया इति यावत्, अनवद्यं निरवद्यम्, पवित्रमिति भावः,

सविधं समीपस्थलम्, तीरमित्यर्थः, न तु पानगोष्ठ्यादेः सान्निध्यमासेव्यमिति अर्थतो बोध्यम्। एकान्ते रहसि, किं ध्येयम् ? चिन्तनीयम् ? कौस्तुभभृतः श्रीविष्णोः, चरणयुगलं पादद्वन्द्वम्, न तु कान्ताया मुखकमलाऽऽदि। किम् आराध्यम् ? सेव्यम् ? पुण्यम् धर्मः (इदमुत्तरम्) न तु पापम्। किञ्च अभिलषणीयम् ? काम्यम् ? (अयं प्रश्नः); करुणा दया, 'आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः' इत्याद्युक्त्या सर्वत्राऽऽत्मप्रत्ययेन निरतिशयाऽऽमोदाऽऽधानरूपा बुद्धिरिति यावत् न तु नैष्ठुर्य्यमभिलषणीयमित्यर्थतो बोध्यम्, निरवधि निरन्तरं, यदासत्त्या येषां गङ्गातीराऽऽदीनां सेवनात्, चेतः चित्तम्, विमुक्त्यै मोक्षाय, मोक्षं प्राप्तुमित्यर्थः, प्रभवति समर्थो भवति। शार्दूलविक्रीडितं वृत्तम् ॥१३०॥ भक्तिरिति—महतां महात्मनाम्, प्रायः बाहुल्येन, भवे महादेवे; कामास्त्रं तत्र, यद्वा—युवतीनां कामास्त्रं मधुरवचनश्रवणाऽऽदि, तत्रेत्यर्थः न, व्यसनमिति शेषः। यशसि सुख्यातौ, चिन्ता, वपुषि शरीरे, शरीररक्षार्थमिति यावत्, न, चिन्तेति शेषः। आर्य्या ॥१३१॥ स इति—स अर्थः द्रविणं योऽर्थो निजहस्ते स्वकरतलवर्ती स्यात्। तच्च जगति मित्रं यद् व्यसने संकटपाते सति निरन्तरं सुहृत्सुखदुःखयोः समदुःखसुखं सहायो वा स्यात्। तच्च रूपं भवति यत्र गुणाः शौर्यधैर्यौदार्यादयः वसन्ति। तच्च विज्ञानं यत्र यस्मिन् ज्ञाते धर्मः पुण्यमेव स्यादुपजायेत। स्पष्टमन्यत् ॥१३२॥

**भाषार्थ**—प्रश्नादिति—प्रश्नपूर्वक या बिना ही प्रश्न के जहाँ कही हुई वस्तु से अन्य की शब्द के द्वारा व्यावृत्ति हो या अर्थसिद्ध व्यावृत्ति ( व्यवच्छेद ) हो, वहाँ परिसंख्यालङ्कार होता है। अर्थात् प्रश्न करके या न करके अर्थात् शब्दों के द्वारा केवल अर्थ के बल से जब किसी वस्तु का किसी वस्तु से भेद दिखलाया जावे तब परिसंख्या नामक अलङ्कार होता है। यह चार प्रकार का होता है—(१) प्रश्नपूर्वक किसी का किसी से शब्दों से व्यवच्छेद। (२) प्रश्नपूर्वक किसी वस्तु का किसी वस्तु से अर्थापत्ति से ( बिना शब्दों के ) व्यवच्छेद (३) प्रश्न बिना किसी वस्तु का किसी वस्तु से शब्दतः व्यवच्छेद (४) प्रश्न बिना किसी का किसी से आर्थिक ( अर्थादापन्न ) व्यवच्छेद। व्यवच्छेद शब्द का अर्थ व्यतिरेक, भेद, पृथक्करण है। इस प्रकार कुल ( साकल्येन ) चार भेद हैं। क्रम से उदाहरण देते हैं—प्रश्नपूर्वक शब्द व्यवच्छेद का उदाहरण जैसे—किं भूषणमिति। इस संसार में सुदृढ़ भूषण क्या है ? यश, रत्न-जटित आभूषणादि नहीं। कौन सा आर्य पुरुषों

का आचरण अनुकरणीय है ? जो शुभाचरण है, दुष्टाचरण नहीं। श्रुति भी कहती है—'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इति। कहीं पर भी न रुकने वाली दृष्टि कौन सी है ? बुद्धि, चर्मचक्षु नहीं। इन उत्तरों को सुनकर प्रसन्न हुआ श्रोता ( शिष्य ) गुरु की प्रशंसा करता है—हे महाराज ! तुमसे अधिक भले और बुरे का विवेक कौन जानता है। यहाँ पर सवाल करके फिर उत्तर दिया है तथा यश से रत्नादि का व्यवच्छेद किया है अर्थात् रत्नों को हटाकर यश को भूषण बताया है तथा निषेध भी साक्षात् नञ्पद से किया है। अतः शाब्द व्यवच्छेद है। किमासेव्यमिति—प्रश्न—मनुष्यों को किसका आसेवन—उपयोग लेना चाहिए ? उत्तर—पवित्र गङ्गा जी के तीर का। प्रश्न—एकान्त में किसका ध्यान करना चाहिए ? उत्तर—कौस्तुभधारी भगवान् मुकुन्द के चरणकमलों का। प्रश्न—क्या प्राप्त करने योग्य है ? उत्तर—पुण्य। प्रश्न—किसकी निरन्तर अभिलाषा करनी चाहिए ? उत्तर—दया की। जिन गङ्गातीर, भगवच्चरण कमलयुगल आदि में आसक्त होने से मन अनन्त मुक्ति की प्राप्ति करने में समर्थ हो जाता है। यहाँ पर इस पद्य में प्रतिषेधक नञ्पद और व्यवच्छेद्य पानगोष्ठी, कान्तामुखकमलादि का शब्दतः कथन नहीं किया गया है। अतः प्रश्नपूर्वक आर्थिक व्यवच्छेद का यह उदाहरण है। भक्तिरिति—बड़े लोगों की भक्ति भगवान् शिवजी में होती है, धन में नहीं। व्यसन शास्त्रों का होता है, स्त्रियों का, जो कि कामदेव के अस्त्र हैं, नहीं। चिन्ता यश की होती है, शरीर की नहीं। यहाँ प्रश्नवाचक किंपदादि में से कोई नहीं है। तथा विभवादि का व्यवच्छेद शब्दों द्वारा किया गया है। क्योंकि अनेक नञ्पद बार बार उपात्त हैं। स इति—वह धन है, जो अपने हाथ में हो। 'विद्या कण्ठ पैसा गण्ठ' यह उक्ति भी प्रसिद्ध है। वह मित्र है, जो सुख-दुःख में हमेशा साथी हो। वह सुन्दरता है, जहाँ गुण हैं। वह ज्ञान है, जिससे धर्मों का आचरण हो। यहाँ प्रश्नाभाव, व्यवच्छेद्य जमीन में गाढ़े धन आदि का अभाव ( अकथन ) तथा व्यवच्छेदक नञ्पद आदि का अनुपादान है। अतः यह चौथी आर्थी परिसंख्या है।

तद्गुणः—

'स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥' [ मम्मटः ]

**कस्यचित् सम्बन्धेन आत्मगुणं परित्यज्य स्वापेक्षया उत्कृष्टस्य गुणं गृहीत्वा तथाभवनं तद्गुणः । यथा—**

**जगाद वदनच्छद्मपद्मपर्य्यन्तपातिनः ।**
**नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥१३३॥** [शिशुपालवधम्]

**टीका**—स्वमुत्सृज्येति—यत् वस्तु अत्युज्ज्वलगुणस्य अत्युत्कृष्टवस्तुसम्बान्धिनः गुणस्येत्यर्थः, योगात् सम्बन्धात्, स्वं स्वकीयम्, गुणम् उत्सृज्य परित्यज्य, तस्य अत्युज्ज्वलवस्तुनः, गुण इव गुणो यस्य तस्य भावः तत्ताम्, गुणेन तत्सादृश्यमित्यर्थः, एति प्राप्नोति, स तु स पुनः, तद्गुणः तद्गुणो नाम अलङ्कारः, भण्यते उच्यते । **जगादे**ति—श्रीबलदेवस्य मुखशोभां वर्णयति—बलरामः, वदनं मुखम्, एव छद्म कपटं यस्य तत्, पद्मं कमलम्, वदनमेव कमलमिति भावः, तस्य पर्य्यन्ते प्रान्ते, पतन्ति सञ्चरन्ति, इति तथाविधान्, मधुलिहः भ्रमरान्, उदग्राः उच्छ्रिताः, ये दशनांशवः दन्तप्रभाः तैः, श्वैत्यं धावल्यम्, नयन् प्रापयन्, जगाद उवाच । अत्र दन्तप्रभायोगात् भ्रमराणां कृष्णवर्णरूपस्वगुणमुत्सृज्य अत्युज्ज्वलस्य श्वैत्यगुणस्य ग्रहणम् ॥१३३॥

**भाषार्थ**—स्वमिति—जो कि एक पदार्थ अपने गुण को छोड़कर अत्युज्ज्वल गुण को ग्रहण कर लेता है, यह 'तद्गुण' अलङ्कार कहलाता है। अर्थात् किसी वस्तु के सम्बन्ध से अपना गुण छोड़कर अपनी अपेक्षा से उत्कृष्ट वस्तु के गुण को लेकर उसी गुण का हो जाना 'तद्गुण' कहा जाता है। जैसे—जगादेति। श्री बलदेव जी मुखकमल के चारों ओर उड़ने वाले भौंरों को अपने दाँतों की तीक्ष्ण सफेद किरणों से सफेद करते हुए बोले अर्थात् मन्द मन्द मुसकराते हुए बोले। यहाँ पर भौंरों ने अपना काला गुण छोड़कर दाँतों का सफेद गुण ले लिया है। अतः 'तद्गुण' अलङ्कार है।

उदात्तम्—

**'लोकातिशयसम्पत्ति-वर्णनोदात्तमुच्यते ।**
**यद्वाऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥'**

[विश्व०]

यत् अलौकिकायाः सम्पत्तेः वर्णनं, यदि वा प्रस्तुतस्याङ्गं महात्मनां चरित्रं स्यात्, तदुभयविधम् उदात्तम्। क्रमेण यथा—

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाऽङ्घ्रिलाक्षाऽरुणाः।
दूरात् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥१३४॥

नाभिप्ररूढाम्बुरुहाऽऽसनेन
संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः
संहृत्य लोकान् पुरुषोऽधिशेते ॥१३५॥ [ रघु० ]

**टीका—लोकातिशयेति**—लोकानतिशेते इति लोकातिशया तादृशी या सम्पत्तिस्तस्या वर्णना उदात्तालङ्कार उच्यते। अथवा यदि प्रस्तुतस्य प्रकरणप्राप्तस्याङ्गमुपकारकं यदि महतां चरितं महात्मनां चरितं भवेत्तदाऽप्युदात्तालङ्कार एव भवतीत्यर्थः। **मुक्ता** इति—विद्वद्भवनेषु विदुषां कवीनां भवनेषु गृहेषु, केलौ क्रीडायाम्, कामक्रीडायां वा, विसूत्राः सूत्ररहिताः ये हाराः मुक्तावल्याः, तेभ्यः गलिताः पतिताः, तथा सम्मार्जनीभिः हृताः आहृताः, एकत्रीकृता इति यावत्, ( अथ ) प्रातः प्रभाते प्राङ्गणसीम्नि अङ्गनप्रान्ते, मन्थरं शनैः शनैः, चलन्त्यः भ्रमन्त्यः, या बालाः योषितः, तासाम् अङ्घ्रिलाक्षया चरणस्थितलाक्षारागेण, अरुणाः रक्तवर्णाः, मुक्ताः मौक्तिकानि, दूरात् दाडिमबीजैः शङ्किता सन्दिग्धा धीः बुद्धिः येषां तथाभूताः सन्तः, केलीशुकाः क्रीडार्थं पोषिताः कीरा यत् कर्षन्ति, तत् भोजनृपतेः त्यागस्य दानस्य, लीलायितं क्रीडितम्। अत्र भोजराजस्य दानमलौकिकमिति प्रदर्शितम्। शार्दूलविक्रीडितं छन्दः ॥१३४॥ **नाभीति**—समुद्रवर्णनमिदम्। युगान्ते प्रलये, उचिता अभ्यस्ता, योगनिद्रा यस्य तादृशः, पुरुषः श्रीविष्णुः, नाभ्यां प्ररूढं सञ्जातम्, यत् अम्बुरुहं कमलम्, तदेव आसनं यस्य तादृशेन, नाभिकमलस्थितेनेत्यर्थः, प्रथमेन आद्येन, धात्रा विधात्रा, ब्रह्मणेत्यर्थः। संस्तूयमानः सन् लोकान् जगन्ति, संहृत्य कुक्षौ निक्षिप्य, अमुं समुद्रम्, अधिशेते अमुष्मिन् शेते इत्यर्थः। कल्पान्तेऽप्यस्तीति भावः। अत्र नारायणस्य चरितं प्रकृतस्य समुद्रमाहात्म्यवर्णनस्याङ्गम्। उपजातिवृत्तम् ॥१३५॥

भावार्थ—लोकातिशयेति—लोकातिक्रम करने वाली सम्पत्ति का वर्णन उदात्त अलङ्कार होता है। तथा प्रस्तुत=प्रकृत वर्ण्यमान का अङ्ग ( अप्रधान ) भूत यदि बड़े आदमियों ( महापुरुषों ) का चरित हो तौ भी 'उदात्त' अलङ्कार होता है। जो कि अलौकिक सम्पत्ति का वर्णन है अथवा वर्ण्यमान का अङ्ग यदि महात्माओं का चरित्र है तो इस प्रकार का उदात्त अलङ्कार होता है। अलौकिक सम्पत्ति का वर्णन जैसे—मुक्ता इति। यह सब राजा भोज की दानलीला का माहात्म्य है, जो कि केलि में ( रात्रि में कामक्रीड़ा में ) कवि जी की स्त्री का हार टूटा तो उसके मोती इधर उधर बिखर गये ( किसी ने उन्हें चुन लेने की भी परवाह नहीं की। घर में सैकड़ों हार हैं, जो भोज ने दिये हैं, दूसरा पहन लिया जायगा )। अब सबेरे जो बुहारने वाली नौकरानी आई, उसने उन्हें झाड़ू से सकेर कर बीच में ( आँगन के ) ढेरी लगा दी। पर सबेरे लड़कियाँ, जो पैरों में महावर लगाए हुई थीं, आईं और महावर पैरों से छूटकर मोतियों में भी जा लगे, उससे वे सफेद मोती लाल रंग के हो गये थे ( यह लड़कियों का या स्त्रियों का मन्थर घूमना झाड़ू देने से पहले ही हुआ था। झाड़ते वक्त वे मोती लाल हो गये थे। तथा बुहारी देने वाली भी ऐसे चढ़े मिज़ाज़ की थी कि उसने भी उन्हें अपने घर ले जाने की परवाह नहीं की, उसे भी क्या कमी थी )। अब पालतू तोतों ने देखा कि अनार के दानों जैसी कोई लाल लाल वस्तु पड़ी है। वे चोंचों से कुतरने दौड़े और छीनाझपटी करने लगे। कविराजों के घरों में मोतियों का इतना अनादर राजा भोज के दान की ही लीला है। यहाँ अलौकिक सम्पत्ति का वर्णन है। नाभीति—समुद्र का वर्णन है कि नाभि से निकले कमल में रहने वाले ब्रह्मा जी से स्तुति किया जाता हुआ युग की समाप्ति पर योगनिद्रा में पड़े रहने की आदत वाले श्री विष्णु भगवान् इस समुद्र में ( क्षीरसागर में ) ही आराम करते हैं—नींद लेते हैं। यहाँ विष्णुचरितवर्णन प्रस्तुत समुद्रवर्णन का अङ्ग है। विष्णुचरित महापुरुष का चरित है।

सूक्ष्मम्—

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा।**
**कयाऽपि सूच्यते भङ्गया यत्र सूक्ष्मं तदुच्यते॥** [ विश्व० ]

यत्र आकारेण, कयाचित् वा अन्यया चेष्टया, सूक्ष्मरूपेण प्रतीतः अर्थः कयाऽपि भङ्ग्या पुनः आविष्क्रियते, तत् सूक्ष्मम् ।

यथा—पिद्धानमन्वगुपगम्य दृशौ
ब्रुवते जनाय वद कोऽयमिति ।
अभिधातुमध्यवससौ न गिरा
पुलकैः प्रियं नववधून्यगदत् ॥१३६॥ [माघः]

टीका—संलक्षित इति—यत्राऽऽकारेणाऽऽकृत्या, इङ्गितेन करनेत्रादि-चेष्टया वा संलक्षितो ज्ञातः सन् सूक्ष्मोऽर्थः कयाऽपि भङ्गया प्रकारान्तरेण सूच्यते विज्ञाप्यते तत् सूक्ष्मम् अलङ्कार उच्यते । **पिद्धानमिति**—नववधूः नवोढा, अन्वक् पश्चात्, उपगम्य दृशौ पिदधानं छादयन्तम्, प्रियं भर्त्तारम्, 'अयं कः ? वद' चक्षुःपिधायकोऽहं कः ? कथय, इति ब्रुवते पृच्छते, जनाय, गिरा वाचा, अभिधातुं नाध्यवससौ नोत्सेहे, लज्जयेति भावः, किन्तु पुलकैः रोमोद्गमैः, न्यगदत् कथयामास । अत्र प्रियज्ञानस्यार्थस्य लज्जया अकथितस्य पुलकैः प्रकाशनात् सूक्ष्मालङ्कारः । प्रमिताक्षरा वृत्तम् ॥१३६॥

भावार्थ—संलक्षित इति—जहाँ पर आकार या इङ्गित से मालूम हुआ सूक्ष्म अर्थ किसी खास ढंग से बतला दिया जाता है, उसका नाम सूक्ष्म अलङ्कार है। इसी बात को टीका में भी लिखा है कि जहाँ आकार या किसी अन्य चेष्टा द्वारा सूक्ष्म रूप से प्रतीत अर्थ प्रकारान्तर से प्रकट किया जाता है, उसका नाम सूक्ष्मालङ्कार है । जैसे—पिदधानमिति । पतिदेव चुपके से पीछे से आये और श्रीमती नायिका की आँखें बन्द कर लीं तथा पूछा कि बता कौन है ? तब नई बहू मारे शर्म के जबान से तो कुछ न बोल सकी पर शरीर पर हुए रोमाञ्चों से उसने यह बता दिया कि आँखें मूँदने वाला कौन है। यहाँ रोमाञ्चों से प्रकारान्तर से कथन है। अतः सूक्ष्म अलङ्कार का सवा सोलह आने उदाहरण है ।

भाविकम्—

'अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।
यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ।।' [विश्व०]

भूतस्य भविष्यतो वा अद्भुतस्य वस्तुनः प्रत्यक्षवत्त्वेन वर्णनं भाविकं नामालङ्कारः। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥१३७॥

**टीका**—अद्भुतस्येति—यद् भूतस्य जातस्य भविष्यतो जनिष्यमाणस्य वाऽद्भुतस्याश्चर्यकरस्य पदार्थस्य प्रत्यक्षायमाणत्वं प्रत्यक्षवद् वर्णनं तद् भाविकं नामालङ्कारो भवति। **मुनिरिति**—येन अगस्त्यमुनिना, एकचुलुके एकस्मिन् गण्डूषे, तौ प्रसिद्धौ, दिव्यौ असाधारणौ, मत्स्यकच्छपौ दृष्टौ, सः योगीन्द्रः ऋषिश्रेष्ठः, महात्मा महनीयस्वरूपः, कुम्भात् सम्भवः उत्पत्तिः यस्य तादृशः, मुनिः अगस्त्यः, जयति सर्वोत्कर्षेण वर्त्ततामित्यर्थः। अत्र पातालवासिनोरपि मत्स्यकूर्मयोः समुद्रेण समं गण्डूषे उद्गमनरूपस्य भूतस्य वस्तुनः प्रत्यक्षायमाणत्वमिति लक्षणसमन्वयः ॥१३७॥

**भाषार्थ**—भूत या भविष्यत् जो अद्भुत बात है, उसका आँखों के सामने नाचता सा वर्णन करना 'भाविक' अलङ्कार कहलाता है। यही संस्कृत टीका का भी अर्थ है। जैसे—मुनिरिति। कुम्भजन्मा योगिराज महात्मा वह अगस्त्य मुनि सब से श्रेष्ठ है, जिसने वे दिव्य मत्स्यावतार और कच्छपावतारधारी भगवान् विष्णु को एक ही चुल्लू में देख लिया अर्थात् जब अगस्त्य जी ने समुद्र को चुल्लू में भरा, तब उनकी अञ्जलि में वे दोनों अवतार भी आ गये।

विनोक्तिः—

'विनोक्तिश्चेद्विना किञ्चित् प्रस्तुतं हीनमुच्यते।'

[ चन्द्रालोकः ]

यदि विनाऽर्थकेन पदेन किमपि प्रस्तुतं विहीनत्वेन वर्ण्यते, तर्हि विनोक्तिः। यथा—

विनयेन विना का श्रीः? का निशा शशिना विना?।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता? ॥१३८॥

**टीका**—विनोक्तिरिति—चेत् यदि, विना विनाऽर्थकेन पदेन, प्रस्तुतं प्रकृतम्, किञ्चित् हीनं विहीनम्, उच्यते, तदा विनोक्तिर्नामालङ्कारः। उदाहरति—

**विनयेनेति** । विनयेन नम्रतया, विना श्रीः, शोभा का ? न काऽपीति भावः । शशिना चन्द्रमसा, विना निशा रजनी का ? सत्कवित्वेन सत्कविकर्मणा काव्येनेति यावत् रहिता वाचां विदग्धता चातुरी कीदृशी सर्वथा नीरसा निस्तत्त्वा चेति भावः । अनुष्टुप् ॥१३८॥

**भाषार्थ**—विनोक्तिरिति—मूल में आये 'विना' पद का अर्थ है—विनार्थक पद। उस पद के द्वारा जब प्रस्तुत में किसी वस्तु की हीनता का वर्णन किया जाता है तब विनोक्ति अलङ्कार होता है। जैसे—विनयेनेति। विनय के बिना धनी होना बेकार है। चाँद के बिना रात किस काम की। वाणी का चातुर्य सत्कवि होने के बिना व्यर्थ है। यहाँ उस उसके बिना उस उसका बेकार होना बताया है । अतः लक्षणसमन्वय स्पष्ट है ।

पर्य्यायोक्तम्—

**'पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।'**

[ विश्व० ]

**भङ्ग्या—प्रकारान्तरेण, गम्यमेव—व्यञ्जनावोध्यमेव ।**

**यथा—**

**स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः ।**
**सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः ॥१३९॥**

[ हयग्रीवव० ]

**टीका**—पर्यायोक्तमिति—यदा भङ्ग्या प्रकारान्तरेण गम्यमेवाभिधीयते उच्यते तदा पर्यायोक्तं नामालङ्कारो भवतीत्यर्थः । **स्पृष्टा** इति—यस्य हयग्रीवस्य दैत्येन्द्रस्य, सैनिकैः, नन्दने इन्द्रवने, ताः प्रसिद्धाः, शच्याः इन्द्राण्याः, केशानां सम्भोगाय भूषणाय, लालिताः सयत्नं पालिताः, पारिजातस्य स्वनामप्रसिद्धदेवतरुविशेषस्य, मञ्जर्य्यः नवोद्गताः पल्लवाङ्कुररूपा वल्लर्य्यः, सावज्ञम् अनादरपूर्वम्; बलादिति यावत्, स्पृष्टाः करेणामृष्टाः त्रोटिता इति यावत्, स हयग्रीव आसीदिति पूर्वतोऽन्वेति । अत्र हयग्रीवकर्तृकस्वर्गविजयरूपस्य गम्यस्य वस्तुनः 'सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः' इत्यात्मकभङ्ग्या वर्णनम् ॥१३९॥

**भाषार्थ**—पर्यायोक्तमिति—यदि दूसरे रूप में, व्यङ्ग्य बात को ही अभिधा से कह दिया जाय तो पर्यायोक्त अलङ्कार होता है। भङ्गि=प्रकार

विशेष, खास ढंग। गम्य=व्यञ्जना से बोधनीय। जैसे—स्पृष्टा इति। जिस हयग्रीव की सेना के सैनिकों ने इन्द्राणी के सिर के बालों को सजाने के लिये खास तौर से पाली हुई पारिजात वृक्ष की मञ्जरियाँ ( फूल ) तिरस्कार के साथ—जबरदस्ती 'देखें, तू क्या करता है' इस भाव को लिये हुए छुईं अर्थात् तोड़ तोड़कर फेंक दीं, पारिजात के पेड़ों की शाखाएँ आदि तोड़कर उन्हें रुण्ड मुण्ड कर दिया, नन्दन वन का सौन्दर्य बिगाड़ दिया अर्थात् हयग्रीव ने स्वर्ग को विजय कर लिया है। यह बात इस उक्त रूप से कही गई है। अतः पर्यायोक्त अलङ्कार है।

व्याजोक्तिः—

'व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः।'

[ विश्व० ]

परेण ज्ञायमानस्याप्यर्थस्य केनापि कपटेन गोपनं व्याजोक्तिः। यथा—आयान्तमालोक्य हरिं प्रतोल्याम्

आल्याः पुरस्तादनुरागमेका।

रोमाञ्चकम्पाऽऽदिभिरुच्यमानं

वामा जुगूह प्रणमन्त्यथैनम् ॥१४०॥ [ कुवलया० ]

**टीका**—व्याजोक्तिमाह—व्याजोक्तिरिति। उद्भिन्नस्य केनापि कारणेन व्यक्तीभूतस्य, वस्तुनः अर्थस्य, व्याजात् कारणान्तरोद्भावनच्छलात्, गोपनं व्याजोक्तिः, तन्नामा अलङ्कारः। उदाहरति—**आयान्त**मिति। श्रीकृष्णमालोक्य रोमाञ्चितायाः कस्याश्चित् सुन्दर्य्याः सख्याः समक्षे तन्निगूहनवर्णनमिदम्। एका काचित्, वामा सुन्दरी, प्रतोल्यां रथ्यायाम्, सङ्कीर्णमार्गे इति यावत्, आयान्तम् आगच्छन्तम्, हरिं श्रीकृष्णम्, आलोक्य दृष्ट्वा; अथ एनं हरिम्, प्रणमन्ती वन्दमाना सतीति यावत्, आल्याः सख्याः, पुरस्तात् समक्षम्, रोमाञ्चकम्पाऽऽदिभिः रोमाञ्चोद्गमवेपथ्वादिभिरङ्गविकारैः, उच्यमानं स्पष्टं घोष्यमाणम्, स्पष्टं भासमानमिति यावत्, अनुरागम् आत्मनि तद्विषयकं प्रेम, जुगूह गोपायितवती। अत्र रोमोद्गमादिनोद्भूतस्य श्रीकृष्णविषयस्यानुरागस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणमनव्याजेन निगूहनात् व्याजोक्तिः। इन्द्रवज्रा वृत्तम् ॥१४०॥ अत्रेदं बोध्यम्—नेयं प्रथमापह्नुतिः, यतोऽत्र विषयस्योपमेयस्य कथनं नास्ति। नापि द्वितीयापह्नुतिः,

तत्र गोपायिता गोप्यं स्वयं प्रथमं प्रकाशयति ततोऽपह्नुते, अत्र न तथेति भेदः। प्रदीपकारेणाप्युक्तम्—न चेयमपह्नुतिः। प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात्। अत्र तु तदभावात्। इति। इदञ्चोपमेयनिषेधपूर्वकोपमानव्यवस्थापनस्याप्युपलक्षणमिति।

**भावार्थ**—व्याजोक्तिरिति—किसी प्रकट हुई वस्तु का किसी बहाने से छिपाना 'व्याजोक्ति' कहाता है। दूसरे से ज्ञायमान अर्थ का कपट से छिपाना व्याजोक्ति अलङ्कार कहलाता है। जैसे—आयान्तमिति। श्रीकृष्ण भगवान् को सामने आता हुआ देखकर रोमाञ्च तथा कम्पन आदि सात्त्विक भावों से प्रकट हुए अनुराग को सखी के सामने नायिका ने कृष्ण को प्रणाम करके छिपा लिया। अर्थात् यह रोमाञ्चादि शृङ्गार के अनुभाव नहीं हैं किन्तु कृष्ण की भक्त्यतिशय से यह हो रहे हैं। लक्षणसमन्वय स्पष्ट है।

वक्रोक्तिः—

**'वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम्।'**

[ कुवलया० ]

**श्लेषेण काका वा अभिहितस्य वाक्यस्य अभिप्रायान्तरपरतया योजनं वक्रोक्तिः। तथा चेयं श्लेषमूला, काकूक्तिमूला चेति द्विविधा। क्रमेण यथा—**

**अहो! केनेदृशी बुद्धिर्दारुणा तव निर्मिता?।**
**त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥१४१॥**

[ कुवलया० ]

**गुरुपरतन्त्रतया वत! दूरतरं देशमुद्यतो गन्तुम्।**
**अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ?॥१४२॥**

[ अलङ्कारसर्वस्वम् ]

**टीका**—वक्रोक्तिरिति—श्लेषकाकुभ्यां श्लेषेण नानाऽर्थोद्भावनेन, काका शोकादिहेतुकस्वरस्य विकारविशेषेण च, अपरस्य येनाभिप्रायेण वाक्यमुक्तं तद्भिन्नस्य अर्थस्य अभिप्रायस्य, प्रकल्पनं सङ्घटनम्, वक्रोक्तिः तन्नामा अलङ्कारः। श्लेषमूलामुदाहरति—**अहो** इति। केन तव बुद्धिः ईदृशी एवंविधा, दारुणा घोरा निर्मिता?

कृता ? अहो चित्रम् । एतदेव वाक्यमन्यथा योजयन्नुत्तरयति—त्रिगुणा रजःसत्त्वतमोगुणात्मिका, बुद्धिः श्रूयते, न तु न पुनः, क्वचित् कस्मिंश्चित् शास्त्रे, दारुमयी काष्ठमयी, काष्ठनिर्मितेति यावत्, श्रूयते इति पूर्वेणाऽन्वेति । अयं भावः—'अहो ! केन (विधात्रा) दारुणा (भयङ्करी) तव बुद्धिः निर्मिता' इत्युक्तं वाक्यमेव 'अहो ! केन (कादृशेन) दारुणा (काष्ठेन) तव बुद्धिः निर्मिता' इत्येवं योजयित्वोत्तरमिदमिति ॥१४१॥ काकुमूलामुदाहरति—**गुर्विति** । हे सखि ! असौ मम नाथः, गुरूणां पित्रादीनाम्, परतन्त्रतया वशंवदतया, बत खेदे, दूरतरं देशम्, गन्तुम् प्रयातुम्, उद्यतः प्रवृत्तः, किन्तु अलिकुलेन भ्रमरपुञ्जेन, कोकिलैः पिकैश्च, ललिते सुन्दरे, सुरभिसमये वसन्ततौ, न एष्यति ? न आगमिष्यति ? (अत्र काकुः), अपि तु अवश्यमेष्यतीत्यर्थः । अत्र काक्वा नैष्यतीत्यस्य अवश्यमेष्यतीत्यस्य अपरस्यार्थस्य प्रकल्पनात् वक्रोक्तिरलङ्कारः । आर्य्या वृत्तम् ॥१४२॥

**भावार्थ**—वक्रोक्तिरिति—श्लेष या काकु से उक्त वाक्य का दूसरा अर्थ कर लेना वक्रोक्ति अलङ्कार होता है । इस प्रकार यह श्लेषमूला वक्रोक्ति और काकुमूला वक्रोक्ति दो प्रकार की वक्रोक्ति कही जाती है । श्लेषमूलक वक्रोक्ति का उदाहरण देते हैं। जैसे—अहो इति । ओहो ! तेरी ऐसी दारुण—क्रूर बुद्धि को किसने बनाया है । यहाँ 'दारुणा' यह पद श्लिष्ट है क्योंकि यह दारुपद की तृतीया विभक्ति के एकवचन में भी बनता है । तथा दारुण शब्द से स्त्रीत्वद्योतक टाप् प्रत्यय के करने पर भी 'दारुणा' यह पद बनता है । प्रश्नकर्ता ने दारुण=कठोर, क्रूर इस अर्थ को लेकर प्रश्न किया था । उत्तरदाता तृतीयाविभक्त्यन्त मानकर उत्तर देता है कि बुद्धि तीन गुणों (सत्त्व, रज, तम) से बनी तो हमने सुनी थी, पर लकड़ी की बनी हुई कभी नहीं सुनी । काकुमूलक वक्रोक्ति का उदाहरण देते हैं—गुरुपरतन्त्रतयेति । हे सखि ! मेरा नायक गुरुओं का—माता-पिता का आज्ञाकारी है। अतः दूर देश को उनकी आज्ञा से जा रहा है या जाने को तैयार है । तो क्या प्यारी सखी ! वह इस भ्रमरभरगुञ्जित वसन्त ऋतु के समय लौटकर नहीं आवेगा । काकु से ध्वनित हुआ कि अवश्य आवेगा ।

आक्षेपः—

**'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।'** [ मम्मटः ]

स्वाऽऽत्मनैव कर्त्तव्यत्वेन उक्तस्य अर्थस्य विचारदशायां किञ्चित् प्रयोजनान्तरमनुसन्धाय प्रतिषेधः आक्षेपः । यथा—

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः !
यत् तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥१४३॥

[ कुवलया० ]

इति अष्टमशिखालोकः ।

**टीका—आक्षेप** इति । स्वयमात्मना उक्तस्य कथितस्योपदिष्टस्येति यावत्, विचारणाद् विचारं कृत्वा पुनः प्रतिषेधः आक्षेपाख्योऽलङ्कारो भवति । अत्रोक्तं पद्यद्वयमपि मिलित्वोदाहरणीभूतमिति बोध्यम् । तत्र प्रथमे पद्ये काव्यस्य रक्षां कर्तव्यत्वेन ब्रूते, द्वितीये च तां निषेधति । तथा हि—**साहित्येति**। हे कवीन्द्राः ! साहित्यमेव पाथोधिः समुद्रस्तस्य मन्थनादुत्थमुत्थितं सञ्जातं कर्णयोरमृतमिव क्षरतीत्युपचारादमृतं रक्षत पालयत । यतः काव्यार्थस्य चौराः स्तेनाः केचिद्भावापहारिणः केचित्पदापहर्तारः अन्ये पुनश्छायाग्रहीतार इत्थमनेकविधाश्चौरा दैत्या इव तस्य अमृतस्य लुण्ठनाय बलाद् ग्रहणाय प्रगुणीभवन्ति बाहुल्यं भजन्ते। काव्यार्थस्तेनानां सम्प्रदायोऽहरह एधते इत्यर्थः । पुनः स्वयमेवोक्तं निषेधति—**गृह्णन्त्विति** । यदि वा अथवा सर्वे यथेच्छं यथाभिलाषं गृह्णन्तु आददतु । यतो बहुषु रत्नेषु अमर्त्यैर्देवैः लुप्तेषु गृहीतेष्वपि सत्सु सिन्धुः समुद्रोऽद्यापि रत्नाकर एव रत्ननिधिरेव प्रख्यायते । यथा तस्य रत्नग्रहणेऽपि हानिर्नाभूत् सैव गतिः साहित्यमहारत्नाम्भोधेरिति भावः । युग्मकम् ॥१४३॥

**भाषार्थ**—आक्षेप इति । स्वयं कहे गये अर्थ का जो विचार से फिर निषेध करना है, यह आक्षेप अलङ्कार कहलाता है। अपने आप कर्तव्य रूप से कहे गये अर्थ का विचार करने पर किसी प्रयोजन विशेष को मन में अनुसन्धान ( सोच विचार ) करके जो निषेध करना है, इसका नाम आक्षेप है । जैसे—साहित्येति । साहित्यरूपी समुद्र के मन्थन से उत्पन्न हुए कर्णों के लिये अमृत=रसायनस्वरूप इस काव्यामृत की रक्षा करो । क्योंकि जैसे उस अमृत की ताक में बहुत से दैत्य रहते थे, इसी प्रकार इस काव्यामृत को

चुराने वाले दैत्यों जैसे बहुत से काव्यचौर पैदा हो गये हैं, जो कि भावचौर, अर्थचौर आदि भेदों से अनेक प्रकार के हैं, जैसा हम संस्कृतटीका में दिखा भी चुके हैं। महाकवि बाण ने भी हर्षचरित में लिखा है कि—

'अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥' इति।

इस प्रकार चौर कवि का लक्षण किया है। अब कवि स्वयं ही इसका खण्डन करता है कि अथवा सब यथेच्छ इस काव्यामृत को लूटो, कवीश्वरों की इसमें कोई हानि नहीं है क्योंकि हजारों करोड़ों रत्नों को दैत्यों ने सागर के तल में से उड़ा लिया किन्तु फिर समुद्र रत्नाकर ही बना हुआ है, उसके रत्नों का ख़ज़ाना कम नहीं हुआ। इसी प्रकार साहित्य-रत्नाकर के रात दिन लुटते रहने पर भी कमी नहीं आ सकती। यहाँ आक्षेप का लक्षणसमन्वय स्पष्ट है। इस आक्षेप के पटाक्षेप के साथ ही काव्यदीपिका का परिशिष्टभागात्मक अष्टमशिखालोक सहित ही पटाक्षेप भी होता है।

---

## प्रश्नोत्तरमाला

(१) स्मरणालङ्कार के दो उदाहरण क्यों दिये हैं ? — पृ० १७० देखो संस्कृत टीका

(२) परिसंख्या के कितने भेद हैं ? — पृ० १८४

(३) पर्याय अलङ्कार का लक्षण लिखो, उदाहरण दिखाओ ? — पृ० १८०, १८१

(४) व्याजोक्ति और अपह्नुति में भेद दिखाओ ? — पृ० १९४ की संस्कृत टीका

(५) वक्रोक्ति [illegible] उदाहरण [illegible] ? — पृ० १९५

(६) 'स्पृष्टास्त[illegible] [illegible]' का अर्थ लिखो ? — पृ० १९३

(७) सूक्ष्म अलङ्कार का लक्षण लिखो ? — पृ० १९०

(८) 'मुक्ताः [illegible]विमुक्त' इत्यादि पद्य का हिन्दी भाषा में अर्थ लिखो तथा यह किसका उदाहरण है, बतलाओ ? — पृ० १८६

एवमन्यदप्यूह्यम्।

---

## टीकाकारपरिचयः—

जमदग्निजगोत्रेण सनाढ्यकुलजन्मना ।
प्राधीतिना यजुर्वेदे शास्त्राणां पारदृश्वना ॥१॥
रामप्यारी यस्य माता भीमसेनः सुधीः पिता ।
हरिस्तेनेयमाख्याता व्याख्या विख्या तु भूतले ॥२॥
पञ्चाननकृता टीका यत्रतत्रापि गीयते ।
खलेखखेदनाशाय कृतज्ञास्तस्य तद्वयम् ॥३॥
हिन्दीभाषां समाश्रित्य प्रोक्तोऽर्थो नैव संस्कृते ।
संस्कृतार्थो न भाषायामुक्तः किं पिष्टपेषणात् ॥४॥
तस्मात् टीकाद्वयं छात्रवृन्दैः साधु निरूप्यताम् ।
विनैव गुरुणा मूलो मूलोऽर्थश्चापि बुध्यताम् ॥५॥
जटिलेषु स्थलेष्वत्र न वक्तव्यमुपेक्षितम् ।
सरलेषु च नाकारि वृथैव ग्रन्थविस्तरः ॥६॥
यद्यस्ति वस्तु किमपीह तथानवद्यं
द्योतेत तत् स्वयमुदेष्यति चानुरागः ।
नो चेत् कृतं कृतकवाग्भिरलं प्रपञ्चै-
र्निर्दोहधेनुमहिमा नहि किङ्किणीभिः ॥७॥

इति शिवम्

**समाप्तश्चायं ग्रन्थः ।**